

श्रीमदभिनवचन्द्रेश्वरो विजयतेतराम्

# श्रीमद्भगवद्गीता

**(पारायण संस्करण)**

शाङ्करभाष्योपेता एवं मिताक्षराहिन्दीटीकासंवलिता




**कैलास विद्या प्रकाशन, कैलास गेट**

दुःख मृत्यु से नहीं, मृत्यु के भय से होता है। - आर्ष वचन.

भजन क्या है?

जो दिख रहा है वह मेरा नहीं है और मेरे लिए भी नहीं है। यह भजन का मूल मन्त्र है।
यह भाव ही सच्चा भजन है। भजन का फल है सार है।

"श्रद्धा स्निग्ध प्रश्न ही जिज्ञासा कहलाता है। – "स्वामी सुबोधानन्द जी महाराज

धर्म और अध्यात्म सम्बन्धी संवाद, जिससे मोह कटता है, गीता कहलाता है।
पूज्य ब्रह्मलीन
स्वामी चिन्मयानन्द जी
महाराज



*।।श्रीमदभिनवचन्द्रेश्वरो विजयतेतराम् ।।*

*श्रीकैलासविद्यालोकस्य त्रयःसप्ततितमः (७३वाँ) सोपानः*

# श्रीमद्भगवद्गीता

## (पारायण संस्करण)

*शाङ्करभाष्योपेता एवं विद्यानन्दीमिताक्षरासंवलिता*

*मिताक्षराव्याख्याकार एवं निर्देशक*


श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर

**अनन्तश्रीविभूषित स्वामी विद्यानन्द गिरि जी महाराज**

वेदान्त-सर्वदर्शनाचार्य






सम्पादक

**स्वर्ण लाल तुली**

बी. इ., डी. डी. इ. (न्यूज़ीलैण्ड)

**प्रकाशक**

**श्री कैलास विद्या प्रकाशन,** कैलास आश्रम, ऋषिकेश – २४९२०१

द्वारा

**श्रीकैलासविद्यातीर्थ-आदि शंकराचार्य स्मारक**

६, भाई वीर सिंह मार्ग, नई दिल्ली – ११०००१ दूरभाष : ३३४७४७५

---

**सौजन्य :** मातुश्री वेलाबेन मूल जी दैया एवं पिताश्री मूल जी भाई विश्राम नरसी दैया की पुण्य स्मृति में श्री हरिराम मूल जी विश्राम नरसी चैरिटेबल ट्रस्ट उद्योग नगर, फ्लैग रोड, मुम्बई-२२ दूरभाष : ४०१५३०१, ४०१५२३७

---

**प्रसंग :** ऋषिकेशस्थ ब्रह्मविद्यापीठ श्री कैलासाश्रम के पञ्चम पीठाधीश्वर आचार्य महामण्डलेश्वर अनन्त श्री स्वामी प्रेम पुरी जी महाराज के संकल्पित स्वामी प्रेम पुरी अध्यात्म विद्याभवन प्रतिष्ठा रजत जयन्ती महोत्सव



प्रथमावृत्तिः २०००          वि. सं. २०५७; सन् २००० ई०

**मूल्य : २२५ रुपये**

**ग्रन्थ प्राप्ति स्थान**

१. **कैलास आश्रम,** कैलास गेट, ऋषिकेश-२४९२०१ दूरभाष : ०१३५-४३०५९८
२. **दशनाम संन्यास आश्रम,** भूपत वाला, हरिद्वार-२४९४०१ दूरभाष : ०१३३-४२७२०६
३. **कैलास आश्रम,** उजेली, उत्तरकाशी – २४९१९३ दूरभाष : ०१३७४-२२३६१
४. **कैलासधाम,** नई झूंसी, प्रयागराज – २२१५०६ दूरभाष : ०५३२-६६८७१८
५. **शंकर ब्रह्मविद्या कुटीर,** ८३-ए, द्वारकापुरी, मुजफ्फर नगर – २५१००१
६. **रामाश्रम,** सामाना मण्डी (पटियाला)- १४७१०१ दू० : ०१७६४-२०४५०
७. **कैलास विद्यातीर्थ - आदि शंकराचार्य स्मारक,** ६, भाई वीर सिंह मार्ग, नई दिल्ली-११०००१ दूरभाष : ०११-३३४७४७५
८. **कैलास आश्रम,** मॉडल टाऊन, रोहतक – १२४००१
९. **कैलास विद्याधाम,** रूप नगर, जम्मू तवी – १८०००१
१०. **कैलास विद्या तीर्थ,** गिरियक रोड़, राजगीर (नालन्दा)-८०३ ११६ दूरभाष : ०६११९-२५२८३
११. **नर्मदा सत्संग आश्रम,** भिलाड़िया घाट, सिवनी मालवा, होशंगाबाद (म. प्र.)

---

*मुद्रक :–* **नाथ प्रिंटर्ज,** जोशी रोड, करोल बाग, नई दिल्ली – ११०००५
दूरभाष – ३५५५५८९, ३६११९७०

*लेज़र कम्पोज़िंग : –* **आकृति प्रिन्टोग्राफिक्स,** जनक पुरी, नई दिल्ली-५८
दूरभाष : ५५२३००६, ५५२६८५६

ॐ

॥ श्रीमदभिनवचन्द्रेश्वरो विजयतेतराम् ॥

# सम्पादकीय

## दिशन्तु शं मे गुरुपादपांसवः

प्रस्थानत्रयी शाङ्करभाष्य ग्रन्थों के पठन पाठन से भी श्रुति स्मृति ग्रन्थों के स्वाध्याय का क्रम बहुत पुराना है। गुरुमुख से इन का श्रवण कर सुयोग्य शिष्य मनन द्वारा इन ग्रन्थों के अभिप्राय को भलीभाँति समझ जाते थे। तत्पश्चात् निदिध्यासन द्वारा प्रतिपादित तत्त्व को आत्मसात कर लेने में ये सफल हो जाते थे। इस क्रम में लिखित ग्रन्थों का प्रचार बहुत कम था। भगवान् श्रीकृष्ण ने अर्जुन को श्रीमद्भगवद्गीता का उपदेश करने के उपरान्त, इस ग्रन्थ के श्रवण के लिये कुछ अनुबन्धों का निर्देश किया -

**इदं ते न तपस्काय नाभक्ताय कदाचन।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥**

इस गीता ज्ञान को तपहीन, अभक्त, सुनने में अरुचि और भगवान् में दोषारोपण करने वाले को मत सुनाना। इस कथन से यह बात सिद्ध होती है कि अर्जुन में इतनी योग्यता भगवान् मानते थे कि बिना ग्रन्थ देखे अर्जुन गीता ज्ञान को दूसरे को देने में सक्षम थे क्योंकि उस समय जो भगवान् बोले उसे ग्रन्थरूप में परिणत करने की संभावना को ध्यान में रख कर भगवान् ने अर्जुन को नहीं कहा कि तुम अमुक अमुक व्यक्ति को यह ज्ञान मत सुनाना।

भविष्य में मनुष्य की मेधाशक्ति का ह्रास हो जायेगा, इसे ध्यान में रखते हुये भगवान् वेदव्यास जी ने शास्त्रों का ग्रथन किया। भगवद्वाणी गीता ज्ञान को महाभारत में ज्यूँ का त्यूँ रख दिया। यह उनका अति उपकार मानव मात्र के ऊपर माना जायेगा।

उससे आगे एक ऐसा समय आया जब ग्रन्थों के यथार्थ अर्थ समझने की क्षमता लोगों में कम होने लगी। कुछ लोग मनमाना अर्थ भी लगाने लगे जो श्रुति सिद्धान्त से विपरीत था। इससे अर्थ की बजाए अनर्थ की उत्पत्ति होने लगी। इस परिस्थिति से निपटने के लिए आचार्यों ने भाष्यग्रन्थ रचकर मानव को सही राह दिखाई।

कलियुग के प्रभाव ने मानव के मस्तिष्क को उलटा सोचने को बाध्य किया **'अधर्मं धर्ममिति या मन्यते तमसावृता'** जिससे वेद विरुद्ध मतो का जन्म हुआ और आसुरी प्रकृति के अनुरूप तीव्र गति से यह विस्तार को प्राप्त हुए। अब तो मानव का अभुदय और निःश्रेयस दोनों खतरे में पड़ गये। ऐसी परिस्थिति में भगवान् शंकर को स्वयं आदि शङ्कराचार्य के रूप में अवतरित होना पड़ा। भगवान् शङ्कराचार्य ने उपनिषद, ब्रह्मसूत्र और भगवद्गीता पर वैदिक सिद्धान्तानुकूल प्रामाणिक भाष्यों की रचना की और अपने अल्प जीवन काल में ही भारत में छाये हुये अन्धकार को प्रकाश में बदल दिया। भारत की अखण्डता बनाये

रखने में भी उन्होंने अद्वितीय भूमिका निभाई। उनके सभी कार्य अलौकिक थे। शास्त्र रचना में वे बेजोड़ थे। दो सौ से भी अधिक ग्रन्थें की ताथी वे धर्मानुयायियों के लिए छोड़ गये। उनके प्रस्थानत्रयी – उपनिषद, ब्रह्मसूत्र एवं श्रीमद्भगवद्गीता पर भाष्य सर्वाधिक प्रसिद्ध एवं प्रामाणिक माने जाते हैं। उनका चिन्तन विश्व को चौंका देने वाला है। कई विद्वानों ने उन्हें भगवान् वेदव्यास जी से भी अधिक सम्माननीय घोषित किया। श्री मधुसूदन सरस्वती ने सिद्धान्त बिन्दु में लिखा है –

**न नौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्धः।**
**विनापि तैः संग्रथितमशेषं तं शङ्करं नौमि सुरेश्वरं च॥**

अर्थात् "सूत्रों की रचना करने के बाद भी उपनिषदों के अभिप्राय को वेद-व्यास जी नहीं बाँध सके क्योंकि वेदव्यास जी के सूत्रों की व्याख्या अन्यथा भी विद्वानों ने की है। पर बिना सूत्र रचना के ही आदि शंकराचार्य जी और उनके शिष्य सुरेश्वराचार्य जी ने जिस केवलाद्वैत सिद्धान्त को सुस्पष्ट रूप से अभिव्यक्त किया है एतदर्थ श्री वेदव्यास जी की अपेक्षा भी हम आदि शंकराचार्य जी एवं सुरेश्वराचार्य जी को अधिक वन्दनीय मानते हैं।"

श्रीमद्भगवद्गीता को विद्वान् गीतोपनिषद् मानते हैं। प्रत्येक अध्याय की पुष्पिका में आए 'भगवद्गीतासूपनिषत्सु' पद का यही अभिप्राय है। समृति प्रस्थान होने पर भी गीता वस्तुतः श्रुति प्रस्थान की अंगीभूत ही है। भगवद्गीता का तात्पर्य शोक निवृत्ति में है जो **'तरति शोकमात्मवित्' 'तमेव विदित्वा मृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय'** इत्यादि श्रौतसिद्धान्तनुकूल है। भगवान् शंकराचार्य के भाष्यों में यह वैशिष्टय है कि उन्होंने श्रौतसिद्धान्तानुकूल प्रस्थानत्रयी ग्रन्थों का नितान्त आवश्यक समन्वय प्रस्तुत किया है। उनके भाष्यों के आधार पर प्रस्थानत्रयी ग्रन्थों का स्वाध्याय ही यथार्थ प्रज्ञा को उत्पन्न कर सकता है। वैसे भी निष्पक्ष विद्वान् यह मानते हैं कि अन्य जितने भी भाष्यों की रचना हुई है वे भगवान् शंकराचार्य भाष्यों के उच्छिष्ट ही हैं। भगवान् शंकराचार्य ने मानव के लिए एक अनमोल धरोहर अपने ग्रन्थों के रूप में छोड़ी जिसे अपना कर वह सरलता से अपने लक्ष्य ब्रह्मात्मैक्य को प्राप्त कर कृतकृत्य हो सकता है।

उचित तो यह था कि भगवान् शंकराचार्य के उपकारों को हम लोग कभी भुलाते नहीं और उनकी वाणियों का उसी प्रकार समादर करते जैसे सिख भाई गुरु ग्रन्थ साहब का करते हैं। पर खेद की बात है कि हम इस कसौटी पर खरे नहीं उतरे। आज की पीढ़ी भगवान् शंकराचार्य के नाम में भी भ्रमित हो रही है। कई लोग भगवान् शंकराचार्य द्वारा संस्थापित चार मठों के वर्तमान मठाधीशों को ही शंकराचार्य जानते हैं। उनकी दृष्टि आद्यजगद्गुरु शंकराचार्य भगवत्पाद तक नहीं पहुँच पाती। इस परिस्थिति में उनकी रचनाओं से ये लोग लाभ कैसे ले सकेंगे?

उपरोक्त शांकरी परम्परा के संपोषणार्थ एवं उससे संभावित मानव कल्याणार्थ

श्रीकैलास आश्रम ऋषिकेश की संस्थापना अनन्त श्री विभूषित स्वामी धनराज गिरि जी महाराज ने सन् १८८० ई० में की। इस पीठ पर क्रमश: दस आचार्य अब तक हुये हैं। वर्तमान् दशम आचार्य पाद ने शांकरी परम्परा संपोषणार्थ विशेष अभियान चलाया जो भागीरथ प्रयत्न ही माना जाएगा। प्रस्थान त्रयी भाष्य ग्रन्थों को आपने टीका, टिप्पण एवं स्वरचित हिन्दी व्याख्याओं सहित प्रकाशित करवाया। इससे भी आगे बढ़ कर अब पारायण संस्करण इन ग्रन्थों के प्रकाशित करवा रहे हैं जिससे शाङ्करभाष्य नित्य पारायण में लोगों को सौविध्य हो। जो व्यक्ति आजीवन नित्य प्रति एक घण्टा भाष्य पारायण करने का संकल्प ले उसे बिना मूल्य पारायण संस्करण ग्रन्थ उपलब्ध कराने की भी व्यवस्था की है। अतएव संतों एवं भक्तों का आपको **'शांकरीपरम्परासंपोषकाचार्य'** उपाधि से समलङ्कृत करना बहुत ही उचित माना जायगा।

उपरोक्त प्रकाशन क्रम में श्रीमद्भगवद्गीता पारायण संस्करण पाठकों के समक्ष प्रस्तुत करते हुये हमें अत्यन्त प्रसन्नता हो रही है। इस ग्रन्थ में मूल गीता श्लोक, उनकी विद्यानन्दी मिताक्षरा हिन्दी व्याख्या और शांकर भाष्य ये तीन सामग्रियाँ रखी गई हैं। हिन्दी व्याख्या शांकरभाष्य के ऊपर श्रीदशम कैलासपीठाचार्य महाराज श्री द्वारा रचित ललिता व्याख्या का ही संक्षेपरूप है। अत: यह शांकरमतानुसार मूल गीता श्लोकों का अर्थ है जो अन्यत्र प्रकाशनों में हमें देखने को नहीं मिला। इस पारायण संस्करण के प्रकाशन में भी, इस से पूर्व प्रकाशित श्रीमद्भगवद्गीता ललिता संस्करण की भाँति श्री वेलाबेन मूल जी दैया एवं श्री मूल जी भाई विश्राम नरसी दैया जी की पुण्य स्मृति में श्री हरि राम मूल जी विश्राम नरसी चैरिटेबल ट्रस्ट उद्योग नगर, मुम्बई का सौजन्य प्राप्त हुआ है। इसे ऋषिकेशस्थ ब्रह्मविद्या पीठ श्री कैलास आश्रम के पञ्चम पीठाधीश्वर अनन्त श्री स्वामी प्रेमपुरी जी महाराज के संकल्पित स्वामी प्रेमपुरी अध्यात्म विद्याभवन मुम्बई के रजत जयन्ती महोत्सव प्रसंग पर प्रकाशित कर इन्होंने इस महोत्सव को चार चाँद लगा दिए हैं।

हम उपरोक्त ट्रस्ट के सभी सदस्यों एवं परिवारजनों को भूरिश: धन्यवाद देना अपना पावन कर्तव्य मानते हैं। इस ग्रन्थ में जहाँ हमारे आराध्य सद्गुरुदेव वर्तमान कैलासपीठाधीश्वर जी महाराज का बराबर मार्ग दर्शन प्राप्त होता रहा वहाँ प्रूफ संशोधन में आचार्य श्री स्वामी विष्णु तीर्थ जी, आचार्य श्री स्वामी भास्कर संवित गिरि जी एवं विद्वद्देशीय ब्र. सिद्धार्थकृष्ण जी का सहयोग भी हमें प्राप्त हुआ। एतदर्थ हम सद्गुरुदेव के सदा अधमर्ण रहेंगे और उक्त तीनों महानुभावों के भी कृतज्ञ रहेंगे। श्री ब्र० सिद्धार्थ कृष्ण जी के निबन्ध 'सुभाशंसा' के लिये भी हम उनका हार्दिक धन्यवाद करते हैं। इत्यों शान्ति:!

दीपावली वि०सं० २०५७

गुरुपादानुरागी

**स्वर्ण लाल तुली**

विद्यासदन, दिल्ली - ११०००९

ॐ

# शुभाशंसा

## ॐ भव शङ्कर देशिक मे शरणम् ॐ

वैदिके किल सनातनधर्मे विवेकवैराग्यादिसाधनचतुष्टयसम्पन्नस्य मर्त्यस्य निरपेक्षामृतत्वसिद्धये सम्प्रदाविद्भिः प्रस्थानत्रयमभ्युपगम्यते–श्रुतिप्रस्थानम् (उपनिषदः), स्मृतिप्रस्थानम् (श्रीमद्भगवद्गीता), दर्शनप्रस्थानञ्चेति (ब्रह्मसूत्रम्)। तत्र यद्यपि श्रीमद्भगवद्गीतायाः ब्रह्मसूत्रेषु भगवतः भाष्येषु चासकृदेव स्मृतित्वसमाख्यानदर्शनान्न श्रुतित्वम्, तथाप्युपनिषत्त्वं तु निर्बाधमेव "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्" इति तस्याः सर्वोपनिषत्सारत्वकथनात्, "उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः। निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेद्" इत्यादिना वार्त्तिकत्रयेण भगवद्भिः सुरेश्वराचार्यैरुक्तस्योपनिषल्लक्षणस्यास्यां समावेशात्, अध्यायान्तेषु सर्वत्र पुष्पिकायां "गीतासूपनिषत्सु" इति वचनोपलब्धेः, स्त्रीलिङ्गा–भिधानान्यथानुपपत्तेश्च। तस्यैतस्य प्रस्थानत्रयस्य सुमधुरं श्रुतिस्मृतिन्यायानुसारिभिः वचनैः समुपबृंहितमतिप्राञ्जलं दुराग्रहादिविकृतमनोमालिन्यरहितैः सर्वैरपि विद्वद्भिः सुपूजितं प्रशस्तं गद्यकाव्यस्येव रमणीयं भाष्यरत्नं जगद्गुरुणा भगवता भाष्यकारेण रचयाञ्चक्रे इति सर्वं सुप्रसिद्धमेव जगति। "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिद्" इति शैल्या सर्वाण्यपि शास्त्राणि सर्वज्ञेन भगवता भाष्यकारेणाचार्यशंकरेण मुमुक्षुजनशङ्करे स्वभाष्यमौक्तिके विस्तरतो वा, संक्षेपतो वा, सूत्रतो वा ग्रथितानीति सर्वं पारायणपद्धत्या तदैकनिष्ठो भूत्वाध्ययनेनैवावबुध्यते, नतु केवलं प्रसिद्धपद्धत्याऽध्ययनाध्यापनमात्रेणेति स्वानुभूतमेवास्माकं न प्रमाणोपन्यासमपेक्षते मनागपि।

एतदेव निगूढं रहस्यं विदित्वा श्रीशाङ्करवाङ्मयमात्रैकनिष्ठाः प्रातःस्मरणीयाः परमपूज्याचार्यचरणाः परमादर्शमहामण्डलेश्वराः स्वामिविद्यानन्दगिरिमहाराजाः वेदान्तसर्वदर्शनाचार्याः शतकृत्वः प्रसिद्धाध्यापनशैल्या श्रीशाङ्करभारतेः जिज्ञासुभ्यः व्याख्यानं विधायापि वर्षं यावद्भाष्यपारायणस्य व्रतं गृहीतवन्तः पुरा कदाचित्। तत्राशातिक्रान्तामुपलब्धिं सञ्जातामवलोक्य श्रीशाङ्करभाष्यस्य प्रसन्नगम्भीरां चित्तशोधिकां मनआह्लादकरीं निर्गुणनिर्विशेषब्रह्मसाक्षात्कारकारिकां सुमधुरवाचमारसयन्त सततमेव परमानन्दमनुभवन्तः, तस्यां पुनः पुनः रिरंसवः श्रीशाङ्करभाष्यभाषयाहृतचित्ताः वत्सरे

समासिंयातेऽपि व्रतपरित्यागं कर्तुमसमर्था अद्यत्वेऽपि नित्यशः सकृद्धोरापर्यन्तं पारायणं कुर्वन्ति, अन्यानापि शताधिकान् गृहीतव्रताननेकजन्मसञ्चितसुकृतवशात्समुत्पन्नसौभाग्यान् कारयन्तीति जानन्ति समेऽपि भवन्तः। एवंप्रकारेणाद्भुतोऽयं सर्वजनलोकोपकारकः पारायणक्रमोऽभूतपूर्वोऽवतरितोऽस्यां भुवि। पारायणकर्तॄणां सौकर्याय पारायणक्रमस्य समस्तलोकसंग्रहाय प्रचारं कर्तुं च सम्पूर्णस्यापि श्रीशाङ्करवाङ्मयस्य विश्राम-स्थलसङ्केतादिसंवलितं पारायणसंस्करणं प्रकाशनीयम्, गृहीतपारायणव्रतेभ्यः भग-वत्कृपापात्रेभ्योऽनेकानेकजन्मसञ्चितसुकृतकर्मवशाद्भाष्यपारायणे सञ्जाताभिलाषेभ्यः सज्जनेभ्यः भगवत्कृपात्मतया पूजागृहे स्थाप्यममूल्यमिदं ग्रन्थरत्नं निःशुल्कमेव प्रदातव्यञ्चेति दृढपरिकराः सन्त्याचार्यचरणाः। तदधुना भगवतोऽ भिनवचन्द्रेश्वरस्य देवाधिदेवस्य महत्या कृपया श्रीमद्भगवद्गीताशाङ्करभाष्यस्य पारायणसंस्करणमपि निष्प्रत्यूहं प्रकाशितं सत्पारायणकर्तॄणां सज्जनानां सेवायां समुपस्थापितं प्रकाशकैरिति महतः हर्षस्य विषयोऽस्माकम्।

उपर्युक्तस्य शुभसङ्कल्पस्य पूर्त्यै भगवतः शुभप्रेरणया श्रीहरिराममूलजी-विश्रामपरसेवान्यासस्य न्यासिनः ग्रन्थरत्नस्यास्य प्रकाशनं महाराजानां चरणकमलयोः प्रार्थितवन्तः, यद्धि साधुवादपुरःसरमनुज्ञातमाचार्यचरणैः। पूर्वेऽपि ललिताटीका-संवलितसंस्करणस्य प्रकाशनमेतेषामेव महानुभावानामर्थव्ययेन सञ्जातम्। तथैवायं ग्रन्थोऽपि स्वर्गवासिनां मातृचरणानां श्रीमती वेलाबेनमूलजीदैयाख्यानां स्वर्गवासिनां पितृचरणानां श्रीमतां मूलजीभाईविश्रामनरसीदैयाख्यानां पुण्यस्मृतौ तदीयसुपुत्रैरुपर्युक्त-न्यासस्य प्रधानन्यासिभिः श्रीकृष्णकुमारमूलजीदैयावर्यैः प्रकाश्यते। तस्मात्तेषां महानुभावानामन्येषाञ्च न्यासिनां सपरिकराणां, ग्रन्थमौक्तिकस्यास्य प्रकाशने सम्पादने च कृतपरिश्रमाणां सम्पादकवर्याणां श्रीस्वर्णलालतुलीत्यभिधानां सर्वधर्मान्परि-त्यज्येत्यादिभगवत्कथनानुगुणं श्रीकृष्णचरणकमलयोः दृढा भक्तिः, सकलपापनिर्मोचनम्, अद्वैततत्त्वसाक्षात्कारेण शोकाद्यात्मकसंसारस्य सकारणस्यात्यन्तिकी निवृत्तिः भवेदिति प्रार्थयामहे।

विदुषां वशंवदः
**सिद्धार्थकृष्णः**
उपनिषत्प्रचारकेन्द्रम्, ऋषिकेशः

अनन्तचतुर्दशी,
वि. सं. २०५७

ॐ

# श्रीमद्भगवद्गीता (पारायण संस्करण)

## आह्निकप्रदीपिका

| आह्निक सं. | अध्याय - श्लोक सं. | पृष्ठ सं. |
|---|---|---|
| १ | २-२१ | ३४ |
| २ | २-७२ | ६५ |
| ३ | ३-४३ | ९५ |
| ४ | ४-४२ | १२७ |
| ५ | ६-२ | १५४ |
| ६ | ६-४७ | १७८ |
| ७ | ८-२२ | २०८ |
| ८ | १०-११ | २३७ |
| ९ | ११-३१ | २६७ |
| १० | १२-२० | २९५ |
| ११ | १३-२१ | ३२३ |
| १२ | १४-२७ | ३५० |
| १३ | १६-२४ | ३७८ |
| १४ | १८-१७ | ४०७ |
| १५ | १८-५५ | ४३५ |
| १६ | १८-७८ | ४५६ |

ॐ

श्रीपरमात्मने नमः

# श्रीमद्भगवद्गीता

## अथ करन्यासः

ॐ अस्य श्रीमद्भगवद्गीतामालामन्त्रस्य भगवान्वेदव्यास ऋषिः। अनुष्टुप् छन्दः। श्रीकृष्णः परमात्मा देवता। अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे इति बीजम्।। सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज इति शक्तिः।। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति कीलकम्।। नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावक इत्यंगुष्ठाभ्यां नमः।। न चैनं क्लेदयन्त्यापो न शोषयति मारुत इति तर्जनीभ्यां नमः।। अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च इत मध्यमाभ्यां नमः।। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन इत्यनामिकाभ्यां नमः।। पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रश इति कनिष्ठिकाभ्यां नमः।। नानाविधानि दिव्यानि नानावर्णाकृतीनि च इति करतलकरपृष्ठाभ्यां नमः।। इति करन्यासः।।

## अथ हृदयादिन्यासः

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावक इति हृदयाय नमः।। न चैनं क्लेदयन्त्यापो न शोषयति मारुत इति शिरसे स्वाहा।। अच्छेद्यो-ऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च इति शिखायै वषट्।। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन इति कवचाय हुम्।। पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रश इति नेत्रत्रयाय वौषट्।। नानाविधानि दिव्यानि नानावर्णाकृतीनि च इति अस्त्राय फट्।। श्रीकृष्णप्रीत्यर्थे पाठे विनियोगः।।

ॐ पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम् ।
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी–
मम्ब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणीम् ।।१।।

नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ।।२।।

प्रपन्नपारिजाताय तोत्त्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ।।३।।

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ।।४।।

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकःकेशवः ।।५।।

पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितम् ।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपंकजं कलिमलप्रध्वंसि नः श्रेयसे ।।६।।

मूकं करोति वाचालं पंगुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ।।७।।

## अथ गीतामाहात्म्यम्

गीताशास्त्रमिदं पुण्यं यः पठेत्प्रयतः पुमान् ।
विष्णोः पदमवाप्नोति भयशोकादिवर्जितः ।।१।।

गीताध्ययनशीलस्य प्राणायामपरस्य च ।
नैव सन्ति हि पापानि पूर्वजन्मकृतानि च ।।२।।

मलनिर्मोचनं पुंसां जलस्नानं दिने दिने।
सकृद्गीताम्भसि स्नानं संसारमलनाशनम्।।३।।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता।।४।।

भारतामृतसर्वस्वं विष्णोर्वक्त्राद्विनिःसृतम्।
गीतागङ्गोदकं पीत्वा पुनर्जन्म न विद्यते।।५।।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।६।।

एकं शास्त्रं देवकीपुत्रगीत-
मेको देवो देवकीपुत्र एव।
एको मन्त्रस्तस्य नामानि यानि
कर्माप्येकं तस्य देवस्य सेवा।।७।।

## अथ ध्यानम्

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ।।१।।

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै
र्वेदैः सांगपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ।।२।।

## आरती

जय भगवद्गीते, जय भगवद्गीते ।
हरि-हिय-कमल-विहारिणि, सुन्दर सुपुनीते ।। जय०
कर्म-सुमर्म-प्रकाशिनि, कामासक्तिहरा ।
तत्त्वज्ञान-विकाशिनि, विद्या ब्रह्म परा ।। जय०

निश्चल-भक्ति-विधायिनि, निर्मल, मलहारी ।
शरण-रहस्य-प्रदायिनि, सब विधि सुखकारी ।। जय०

राग-द्वेष-विदारिणि, कारिणि मोद सदा ।
भव-भय-हारिणि, तारिणि, परमानन्दप्रदा ।। जय०

आसुर-भाव-विनाशिनि, नाशिनि तम-रजनी ।
दैवी सद्गुणदायिनि, हरि-रसिका सजनी ।। जय०

समता-त्याग सिखावनि, हरि-मुखकी वानी ।
सकल शास्त्रकी स्वामिनि, श्रुतियोंकी रानी ।। जय०

दया-सुधा बरसावनि मातु! कृपा कीजै ।
हरिपद-प्रेम दान कर अपनो कर लीजै ।। जय०

## श्रीकृष्ण परमात्मा हैं

वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने ।।

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥ मनु-१-१०.

ॐ

तत्सद्ब्रह्मणे नमः

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता

## शाङ्करभाष्योपेता एवं मिताक्षराटीकासंवलिता



### अथ श्रीमदाद्यशङ्कराचार्यविरचितभाष्यम्

[तत्रोपोद्घातभाष्यारम्भः]

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥

स भगवान्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वाप्रजापतीन्प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास।

द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। तत्रैको जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानः। दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे, प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसु-

देवादंशेन किल संबभूव। ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम्।

स च भगवाञ्ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्निव लक्ष्यते। स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश, गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति। तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्। तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम्। तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति। तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—

"स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने" ( महा. आश्व. १६.१२ ) इत्यनुगीतासु। तत्रैव चोक्तम्—

"नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी।
यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन्"॥

( महा. आश्व. १९.७ )

'ज्ञानं संन्यासलक्षणम्' इति च ( महा. आश्व. ४३.२६ )

इहापि चान्त उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' ( गी. १८.६६ ) इति। अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णानाश्रमांश्चोद्दिश्य विहितः, स च देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसंधिवर्जितः। शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते। तथा चेममेवार्थमभिसंधाय वक्ष्यति—'ब्रह्मण्याधाय कर्माणि' ( गी. ५.१० ) 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' ( गी. ५.११ ) इति।

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद्विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रम्। यतस्तदर्थे विज्ञाते समस्तपुरुषार्थसिद्धिः इत्यतस्तद्विवरणे यत्नः क्रियते मया।

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्यस्योपोद्घातः॥*







ॐ

# श्रीमद्भगवद्गीता

## प्रथमषट्कम्

## अथ प्रथमोऽध्यायः

**धृतराष्ट्र उवाच —**

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय॥१॥**

**अथ 'विद्यानन्दीमिताक्षरा' टीका**

(महाभारत संग्राम दस दिनों से चलते रहने पर जब कुरुक्षेत्र में अर्जुन के बाणों द्वारा भीष्मपितामह शरशय्या पर सुला दिये गये, तब इस संदेश को सुनते ही प्रज्ञाचक्षु धृतराष्ट्र कह उठा) हे संजय! (प्रवृत्ति एवं निवृत्तिरूप धर्म की उत्पत्ति एवं उसके रक्षणस्थान) धर्मक्षेत्र कुरुक्षेत्र में युद्ध की इच्छा से एकत्रित हुए मेरे तथा पाण्डुपुत्रों ने क्या कर दिया? (**'किम्'** शब्द यहाँ पर आक्षेप अर्थ में है, प्रश्न या प्रकार अर्थ में नहीं)॥१॥

**संजय उवाच —**

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत्॥२॥**

संजय ने कहा कि उस समय पाण्डवों की व्यूहाकार सेना को देख राजा दुर्योधन ने (भयभीत हो) गुरुदेव द्रोणाचार्य के पास जाकर (यह) वचन कहा॥२॥

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥३॥**

हे आचार्य! आप के बुद्धिमान् शिष्य द्रुपदपुत्र धृष्टद्युम्न द्वारा पाण्डुपुत्रों की व्यूहाकार खड़ी की गयी इस महती सेना को आप देखें॥३॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।**
**युयुधानो विराटश्च द्रुपदश्च महारथः॥४॥**

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः॥५॥**

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥६॥**

शत्रु की इस सेना में जो शूरवीर हैं वे सब के सब बड़े-बड़े धनुष वाले, युद्ध में भीम व अर्जुन के समान हैं। यथा युयुधान (सात्यकि) विराट्, महारथी द्रुपद, धृष्टकेतु, चेकितान, शक्तिशाली काशिराज, पुरुजित्, कुन्तिभोज, मनुष्यों में श्रेष्ठ शैब्य, पराक्रमी युधामन्यु, बलवान् उत्तमौजा, सुभद्रापुत्र अभिमन्यु और पाण्डवों के अंश से द्रोपदी में उत्पन्न पाँच पुत्र-ये सब के सब महारथी हैं, (अतः उपेक्षणीय नहीं हैं) ॥४-६॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते॥७॥**

(परकीय शक्तिशाली सेना को देख हमें कोई भय नहीं है, क्योंकि) हमारी सेना में जो विशिष्ट सेनानायक हैं, हे द्विजोत्तम! उन्हें आप अच्छी प्रकार समझ लें। (आप पहले से भी जानते हैं, उनसे अपरिचित आप नहीं हैं और न वे आप से अज्ञात हैं; फिर भी) विज्ञापन के रूप में उन्हें मैं आप के समक्ष कहता हूँ॥७॥

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च॥८॥**

आप, पितामह भीष्म, कर्ण, संग्रामविजयी कृपाचार्य, अश्वत्थामा, विकर्ण और वैसे ही सोमदत्त के पुत्र भूरिश्रवा हैं॥८॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः॥९॥**

(आप से लेकर मेरी सेना में जो भी प्रविष्ट हैं वे) अन्य शूरवीर मेरी विजय के लिए जीवन की आशा छोड़कर, नानाशस्त्र एवं प्रहरण से युक्त हैं और सब के सब युद्ध विद्या में कुशल हैं॥९॥

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्॥१०॥**

(अपने भयाभाव को बतलाने के लिए दुर्योधन एक और हेतु द्रोणाचार्य के समक्ष प्रस्तुत कर रहे हैं। प्रसिद्ध महिमा, सूक्ष्म बुद्धि वाले) भीष्मपितामह द्वारा रक्षित हमारी सेना को जीतना सुगम नहीं है किन्तु भीम द्वारा अभिरक्षित इन पाण्डवों की यह सेना जीते जाने में सुगम है॥१०॥

**अयनेषु च सर्वेषु यथाभागमवस्थिताः।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि॥११॥**

(अपनी सेना को भीष्मपितामह द्वारा अधिष्ठित होने के कारण दुर्योधन ने बलिष्ठ कहा) ऐसी स्थिति में आप सब का कर्त्तव्य हो जाता है, कि अपने-अपने मोर्चे पर यथास्थान डटे रहें और पितामह भीष्मजी की ही सभी ओर से रक्षा करते रहें॥११॥

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्॥१२॥**

(आचार्य से इस प्रकार कहते समय भयाविष्ट दुर्योधन को देखकर भीष्मपितामह ने तदनुरूप कार्य किया) कौरवों में वृद्ध प्रतापी भीष्मपितामह ने उस दुर्योधन के हृदय में हर्ष उत्पन्न करते हुए पहले सिंह के समान गर्जना की और तत्पश्चात् जोर से शङ्ख फूँक दिया॥१२॥

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्॥१३॥**

राजा दुर्योधन के अभिप्राय को समझकर भीष्मपितामह की उक्त प्रवृत्ति के बाद उनके पक्ष के वीरों ने भी शङ्ख, नगारे, ढोल, मृदंग और नरसिंग बाजे एक साथ बजाये जिनका मिलित शब्द बड़ा भयंकर हुआ॥१३॥

त्रैलोक्यविजयोपकरणभूते - महति स्यन्दने

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः॥१४॥**

इस प्रकार दुर्योधन पक्ष के वीरों की प्रवृत्ति देखकर उसके निकटवर्ती चार सफेद घोडों से जुते महान् रथ पर बैठे भगवान् श्रीकृष्ण और पाण्डुनन्दन अर्जुन ने भी दिव्य शङ्ख बजाये॥१४॥

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः॥१५॥**

हृषीकेश श्रीकृष्ण ने पाञ्चजन्यनामक और धनंजय अर्जुन ने देवदत्तनामक शङ्ख बजाया। भयंकर कर्म करने वाले वृकोदर (भीम) ने पौण्ड्रनामक महान् शङ्ख को बजाया॥१५॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ॥१६॥**

कुन्ती पुत्र राजा युधिष्ठिर ने अनन्तविजय नामक शङ्ख को बजाया। नकुल ने सुघोष नामक और सहदेव ने मणिपुष्पक नामक शङ्ख को बजाया॥१६॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः॥१७॥**

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक्॥१८॥**

हे पृथ्वीपते! काशिराज, शिखण्डी, धृष्टद्युम्न, विराट, सात्यकि, द्रुपद और द्रोपदी के पाँचों पुत्र एवं सुभद्रापुत्र अभिमन्यु ने भी सभी प्रकार से पृथक्-प्रथक् शङ्ख बजाये। इन सभी वीरों के लिए महाधनुर्धारी, महारथी, अजेय और महाबाहु ऐसे चार विशेषण दिए गये हैं (जो उचित ही है)॥१७-१८॥

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्॥१९॥**

उन पाण्डवपक्षीय वीरों के शङ्ख बजाने पर उत्पन्न हुए महान् शब्द ने धृतराष्ट्रपक्षीय वीरों के हृदयों को विदीर्ण कर डाला, क्योंकि वह भयंकर शब्द आकाश एवं पृथ्वी को गुँजाते हुए उनके हृदय को कंपायमान कर रहा था॥१९॥

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः॥२०॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते।**
**अर्जुन उवाच—**
**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत॥२१॥**

हे पृथ्वीपते! (भयंकर शब्द सुनने के बाद धृतराष्ट्र पक्ष के वीरों को भागना चाहिए था, किन्तु) वे अब भी व्यवस्थित खड़े हैं ऐसा उन्हें देख पाण्डुपुत्र कपिध्वज अर्जुन ने शस्त्रप्रहार प्रवृत्ति के समय धनुष उठाकर हृषीकेश श्रीकृष्ण से यह वचन कहा— (अर्जुन ने भगवान् श्रीकृष्ण को '**अच्युत**' शब्द से सम्बोधित किया क्योंकि वे अपने स्वरूप, ऐश्वर्य एवं मर्यादा से कभी भी च्युत नहीं होते) — सन्निकटवर्ती दोनों सेनाओं के मध्य में मेरे रथ को खड़ा करें॥२०-२१॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे॥२२॥**

शत्रुपक्ष में खड़े इन युद्ध करने की इच्छा वालों को जब तक मैं अच्छी प्रकार से देख लूँ और इस रण प्रांगण में किन-किन लोगों के साथ मुझे युद्ध करना है, इसका भी निर्णय कर लूँ, इतनी देर तक रथ को खड़ा रखें॥२२॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः॥२३॥**

दुष्टबुद्धि धृतराष्ट्र के पुत्र दुर्योधन का युद्ध में हित चाहने वाले ये जो वीर राजा नाना देश से कुरुक्षेत्र में एकत्रित हुए हैं, उन शस्त्रास्त्र से सुसज्जित युद्ध की इच्छा वाले शूरवीरों को मैं देखूँगा॥२३॥

**संजय उवाच—**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥२४॥**

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति॥२५॥**

संजय ने कहा—हे भरतवंशी धृतराष्ट्र! गुडाकेश अर्जुन के ऐसा कहने पर श्रीकृष्ण ने भीष्मद्रोणादि जिसमें प्रमुख हैं ऐसे सभी राजाओं के सामने दोनों सेनाओं के मध्य में उत्तम रथ को खड़ा करके कहा कि हे पार्थ! इन समीपवर्ती एकत्रित कुरुवंशियों को देख (जिनके साथ तुझे युद्ध करना है)॥२४-२५॥

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्।**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥२६॥**

**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि।**

(इस स्थिति में हिंसा महान् अधर्म है ऐसी विपरीत बुद्धि हो जाने

के कारण अर्जुन के मन में युद्ध से उपरामता हो आती है जिसे आगे कहते हैं) भगवान् श्रीकृष्ण के ऐसा कहने पर पृथापुत्र अर्जुन ने दोनों सेनाओं में स्थित पितरों तथा पितामहों, आचार्यों, मातुलों, भाइयों, पुत्रों, पौत्रों, मित्रों, श्वशुरों और सुहृदों को भी देखा॥२६, २७ पूर्वार्ध॥

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्॥२७॥**
**कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत्।**
**अर्जुन उवाच—**
**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्॥२८॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते॥२९॥**

वह कुन्ती पुत्र अर्जुन दोनों सेनाओं में व्यवस्थित पूर्वोक्त सभी बन्धुजनों को देखकर अत्यन्त कायरता से घिर गया और उसने विषाद करते हुए भगवान् श्रीकृष्ण से यह कहा। अर्जुन ने कहा— हे श्रीकृष्ण! युद्ध की इच्छा से युद्धभूमि में उपस्थित इन आत्मीयजनों को देखकर मेरे शरीरावयव शिथिल हो रहे हैं और मुख अत्यन्त सूख रहा है। मेरे शरीर में कम्पन और रोमाञ्च हो रहा है॥ २७-२९॥

**गाण्डीवं स्त्रंसते हस्तात्त्वक्चैव परिदह्यते।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः॥३०॥**

गाण्डीवधनुष हाथ से सरकता जा रहा है और त्वचा भी अत्यन्त जल रही है। मेरा मन चक्कर काट रहा है, अतः मैं खड़ा रहने में समर्थ नहीं हूँ॥३०॥

**निमित्तानि च पश्यामि विपरीतानि केशव।**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे॥३१॥**

हे केशव! इस समय मैं विपरीत शकुनों को देख रहा हूँ, (इसलिए मुझे उपरति हो गयी है— ऐसा मानकर अर्जुन कहता है।) संग्राम में अपने बन्धुजनों को मारकर मैं कल्याण भी नहीं देखता॥३१॥

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा॥३२॥**

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च॥३३॥**

अतः हे गोविन्द! इस युद्ध से प्राप्त होने वाले विजय, राज्य और सुख को भी मैं नहीं चाहता हूँ। हमें राज्य से क्या लेना है, भोगों और जीवन से भी क्या प्रयोजन है? क्योंकि जिनके लिए हमें राज्य, भोग और सुख अभीष्ट थे, वे ही हमारे आत्मीयजन धन एवं प्राणों की आशा छोड़कर युद्ध में सामने खड़े दीखते हैं॥३२-३३॥

**आचार्याः पितरः पुत्रास्तथैव च पितामहाः।**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा॥३४॥**

आचार्य, पितर, पुत्र, वैसे ही पितामह, मामा, श्वशुर, पौत्र, श्याले और सम्बन्धीजन सामने (खड़े हैं)॥३४॥

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते॥३५॥**

हे मधुसूदन! ये मुझे मारें तो भी मैं इन्हें मारना नहीं चाहता। भूमि के राज्य प्राप्ति की बात कौन कहे, तीनों लोकों के राज्य के लिए भी मैं इन्हें मारना नहीं चाहता॥३५॥

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन।**
**पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६॥**

हे जनार्दन! इन धृतराष्ट्र के पुत्र दुर्योधनादि को मारकर हमें क्या

प्रसन्नता होगी, प्रत्युत इन आततायियों को मारकर हमें पाप ही तो लगेगा॥३६॥

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान्।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव॥३७॥**

(अतः युद्ध का कोई अच्छा फल नहीं दीखता और अनर्थ भी सम्भव है,) इसलिए अपने ही बन्धुजन धृतराष्ट्र पुत्रों को मारना हमारे लिए उचित नहीं है। हे माधव! भला स्वजनों को मारकर हम कैसे सुखी हो सकेंगे?॥३७॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्॥३८॥**

यद्यपि लोभ से नष्ट हुई बुद्धि वाले ये लोग कुल के क्षय के कारण होने वाले दोष को और मित्रों के साथ द्रोह करने से होने वाले पातक को नहीं समझ रहे हैं। (इसलिए युद्ध में इनकी प्रवृत्ति सम्भव हो रही है)॥३८॥

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन॥३९॥**

पर हे जनार्दन! कुलक्षयजनित दोष को समझने वाले हम लोग इस पाप से निवृत्त होने की बात क्यों न समझ लेवें। (कुल के नाश से और मित्रों के साथ द्रोह करने पर जो पाप होता है उसे जाने बिना उसका परिहार सम्भव नहीं है। अतः हम लोग पहले उसे समझें और तत्पश्चात् युद्ध में प्रवृत्त न हों, बस यही उचित होगा)॥३९॥

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत॥४०॥**

कुल के नाश होने पर कुल परम्परा से होने वाले अग्निहोत्रादि क्रिया-

साध्य सनातनधर्म, कर्ता के अभाव में, नष्ट हो जाते हैं और धर्म के नष्ट होने पर कुल घातक के सम्पूर्ण कुल को अधर्म अत्यन्त दबोच डालता है ॥४०॥

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः॥४१॥**

हे कृष्ण! अधर्म के बढ़ जाने से कुल की स्त्रियाँ संयम न रखने के कारण अत्यन्त दूषित हो जाती हैं और हे वृष्णिवंशी भगवन्! फिर तो उन दुष्ट स्त्रियों में वर्ण संकर सन्तान उत्पन्न होती है॥४१॥

**संकरो नरकायैव कुलघ्नानां कुलस्य च।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥४२॥**

वर्णसंकर सन्तान कुलघातियों को एवं कुल को नरक में ही पहुँचाती है। इतना ही नहीं, श्राद्धादि पिण्ड क्रिया और तर्पणादि उदक क्रिया के लुप्त हो जाने पर उनके पितरों का पतन भी अवश्य हो जाता है॥४२॥

**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥४३॥**

ये सब वर्ण संकरकारक दोष हैं। इनसे कुलघातियों के जाति धर्म और सनातन कुल धर्म नष्ट हो जाते हैं। (इन सभी दोषों को देखते हुए हमें युद्ध से उपरत होना ही श्रेयस्कर है)॥४३॥

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम॥४४॥**

हे जनार्दन! जिनके कुलधर्म नष्ट हो चुके हैं ऐसे मनुष्यों का नरक में निश्चित वास होता है, ऐसा हमने शास्त्रों एवं पूर्वपुरुषों से सुना है॥४४॥

**अहो बत महत्पापं कर्तुं व्यवसिता वयम्।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः॥४५॥**

आश्चर्य है एवं दुःख भी है कि राज्य सुख के लोभ से प्रेरित हो हम अपने स्वजनों का वध करना रूप महत्पाप करने का निश्चय कर चुके हैं और उद्यत भी हैं॥४५॥

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्॥४६॥**

मैं अब शस्त्र छोड़ रहा हूँ और इसके आगे कोई प्रतिकार भी नहीं करूँगा, फिर भी मुझे धृतराष्ट्र के शस्त्रधारी पुत्र रण में मारें, तो वह मेरे लिए कल्याणकारक होगा॥४६॥

**सञ्जय उवाच —**
**एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत्।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः॥४७॥**

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः॥१॥***

संजय धृतराष्ट्र से कहते हैं कि इस प्रकार अर्जुन ने कहा और शोक संविग्न (उद्विग्न) मन वाला वह बाण के सहित धनुष को फैंककर रथ के पिछले भाग में जा बैठा॥४७॥

*इस प्रकार श्रीमद्भगवद्गीता की श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी द्वारा रचित अर्जुनविषादयोगनामकप्रथमाध्याय की मिताक्षरा व्याख्या सम्पूर्ण हुई॥१॥*

☆☆☆☆

ॐ

# श्रीमद्भगवद्गीता

# अथ द्वितीयोऽध्यायः

**संजय उवाच—**

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम्।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः॥१॥**

संजय ने धृतराष्ट्र से कहा कि पूर्वोक्त अध्याय में बतलायी गयी कायरता से घिरे, नेत्रों में आँसू भरे व्याकुल नेत्र वाले उस विषाद युक्त अर्जुन से मधु दैत्य के संहारक भगवान् श्रीकृष्ण ने यह वचन कहा, अर्थात् उसकी उपेक्षा नहीं की॥१॥

**श्रीभगवानुवाच—**

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन॥२॥**

भगवान् ने कहा (कि अर्जुन तुम क्षत्रिय प्रवर हो,) तुममें शिष्टपुरुषों से गर्हित, युद्ध से पराङ्मुखत्व, विषम स्थान में किस कारण से उपस्थित हो गया। यह तो शास्त्र के तात्पर्य को न जानने वाले लोगों से सेवित है, स्वर्ग को न देने वाला, प्रत्यवाय का कारण एवं अपयश कराने वाला कश्मल है॥२॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप॥३॥**

हे पृथापुत्र अर्जुन! तुम नपुंसकता को प्राप्त मत होओ, ऐसे महामहिमा-शाली तेरे लिए यह उचित नहीं है। अतः हे शत्रुओं को संतप्त करने वाले! तू हृदय की दुर्बलता को छोड़कर युद्ध के लिए खड़ा हो जा॥३॥

**अर्जुन उवाच—**

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन॥४॥**

अर्जुन ने कहा—हे मधुसूदन! इस महाभारत संग्राम में मैं किस प्रकार पितामह भीष्म और गुरु द्रोण के साथ बाणों से युद्ध करूँगा, क्योंकि हे अरिसूदन! (ये दोनों ही प्रतिदिन पुष्पों से) पूजा के योग्य हैं॥४॥

**गुरूनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके।**
**हत्वाऽर्थकामांस्तु गुरूनिहैव**
**भुञ्जीय भोगान्रुधिरप्रदिग्धान्॥५॥**

ये गुरुजन महानुभाव हैं, शास्त्रज्ञान से सम्पन्न हैं। इन्हें न मारकर यदि इस लोक में मुझे भिक्षान्न से जीवन बिताना पड़े तो भी मैं उसे श्रेष्ठ मानता हूँ, (गुरुजनों की हिंसाकर राज्य भोग की हमें कोई अपेक्षा नहीं है) इन गुरुजनों को मारकर इनके रक्त से रंजित भोगों को ही तो भोगूँगा॥५॥

**न चैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषाम-**
**स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥६॥**

साथ ही इस बात से भी हम आश्वस्त नहीं हैं कि इस संग्राम में हम जीतेंगे अथवा हमें वे लोग जीत लेंगे। (कथंचित् हमारी विजय का आश्वासन मिल भी जाय तो भी). जिन्हें मारकर हम स्वयं भी जीवित रहना नहीं चाहते, वे ही धृतराष्ट्र के पुत्र और उनके पक्ष के वीरवर सामने खड़े दिखायी दे रहे हैं। (अर्थात् भिक्षान्न जीवन से युद्ध में श्रेष्ठत्व सिद्ध नहीं हो रहा है)॥६॥

यहाँ अर्थ ऐसा होना चाहिए कि मैं उन पर विजय प्राप्त करूँ या उनको जीतने दूँ इसमें क्या श्रेष्ठ है यह अर्जुन का [illegible]

**कार्पण्यदोषोपहतस्वभावः**
**पृच्छामि त्वां धर्मसंमूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥७॥**

कार्पण्य दोष से दूषित चित्तवाला तथा परब्रह्म के सम्बन्ध में जिसका चित्त विवेकशून्य हो ऐसा आज मैं हो गया हूँ। अतः आप से पूछता हूँ, आप मुझे जो निश्चित कल्याणकारक साधन हो, उस साधन को बतलावें। मैं आप का शिष्यत्व स्वीकार करता हूँ और आप की शरण में भी आ गया हूँ। ऐसे शरणागत मुझ शिष्य को निश्चित कल्याणकारक साधन अवश्य बतलावें॥७॥

**न हि प्रपश्यामि ममापनुद्या-**
**द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाऽऽधिपत्यम्॥८॥**

क्योंकि सप्तद्वीपा पृथ्वी में निष्कण्टक एवं धनधान्य से सम्पन्न राज्य को और साथ ही इन्द्रादि देवताओं के स्वामित्व को प्राप्त कर भी मैं इनके भीतर शोकापनयन साधन को नहीं देखता हूँ। ये सब मिलकर भी मेरी इन्द्रियों को शोषित करने वाले शोक को दूर नहीं कर सकेंगे। (अतः अब तो शोक संतरण का उपाय आप ही मुझे बतलावें)॥८॥

**संजय उवाच—**

**एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह॥९॥**

संजय ने धृतराष्ट्र से कहा—परंतप गुडाकेश ने हृषीकेश श्रीकृष्ण से कहा कि हे भगवन्! मैं अब युद्ध नहीं करूँगा, ऐसा गोविन्द से कहकर उस रणभूमि में अर्जुन मौन हो गया॥९॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः॥१०॥**

संजय ने यह भी कहा कि हे भारत! दोनों सेनाओं के मध्य उस विषादयुक्त अर्जुन से इन्द्रियों के स्वामी भगवान् श्रीकृष्ण ने हँसते हुए यह वचन कहा, (जिसे भगवद्गीता कहते हैं)॥१०॥

*॥अथ श्रीमद्भगवद्गीता सम्बन्धभाष्यम्॥*

अत्र च —

'दृष्ट्वा तु पाण्डवानीकम्' (गी. १.२) इत्यारभ्य 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' (गी. २.९) इत्येतदन्तः प्राणिनां शोकमोहादिसंसारदुःखबीजभूतदोषोद्भवकारणहेतुप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः। तथा ह्यर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेष्वहमेषां ममैत इत्येवंप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ 'कथं भीष्ममहं संख्ये' (गी. २.४) इत्यादिना। शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षात्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम। परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते। तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात्। स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा च भवति। तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखसंप्राप्तिलक्षणः संसारोऽनुपरतो भवतीत्यतः संसारबीजभूतौ शोकमोहौ। तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थमर्जुनं निमित्तीकृत्याऽऽह भगवान्वासुदेवः—अशोच्यानित्यादि।

तत्र केचिदाहुः, सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव

केवलात्कैवल्यं न प्राप्यत एव, किं तर्हि? अग्निहोत्रादि-श्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति। ज्ञापकं चाऽऽहुरस्यार्थस्य—'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि' ( गी. २.३३ ) 'कर्मण्येवाधिकारस्ते' ( गी. २.४७ ) 'कुरु कर्मैव तस्मात्त्वम्' ( गी. ४.१५ ) इत्यादि।

हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्याशङ्का न कार्या, कथं क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्त-क्रूरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' ( गी. २.३३ ) इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति।

तदसत्, ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोरशो-च्यानित्यादीनां भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' ( गी. २.३१ ) इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतं, तत्सांख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्ताऽऽत्मेति प्रकरणार्थनिरूपणाद्या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति, ते सांख्याः।

एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृ-भोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपण-लक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः। सा येषां कर्मिणा-मुचिता भवति ते योगिनः। तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' ( गी. २.३९ ) इति। तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति—'पुरा वेदात्मना मया प्रोक्ता।' इति। तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां

वक्ष्यति—'कर्मयोगेन योगिनाम्' ( गी. ३.३ ) इति। एवं सांख्यबुद्धिं योगबुद्धिं चाऽऽश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासंभवं पश्यता।

यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे—"एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति" ( बृ. ४.४.२२ ) इति सर्वकर्मसंन्यासं विधाय तच्छेषेण "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" ( बृ. ४.४.२२ ) इति। तत्रैव च — "प्राग्दारपरिग्रहात्पुरुष आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनं" "सोऽकामयत" ( जै. २-६ ) इत्यविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि। "तेभ्यो व्युत्थाय प्रव्रजन्ति" इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः।

न चार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' ( गी. ३.१ ) इत्यादि। एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव "ज्यायसी चेत्कर्मणस्ते मता बुद्धिः" ( गी. ३.१ ) इति। किंच यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यादर्जुनस्यापि स उक्त एवेति—'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' ( गी. ५.१ ) इति कथमन्यतरविषय एव प्रश्नः स्यात्? न हि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति।

अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथाऽपि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति। न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं युक्तम्। नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम्।

किंच क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतः 'तत्किं कर्मणि घोरे मां नियोजयसि' ( गी. ३.१ ) इत्युपालम्भोऽनुपपन्नः, तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणाऽऽत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः।

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तिस्तथैव कर्मणि प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते, न तत्कर्म, येन बुद्धेः समुच्चयः स्यात्।

यथा भगवतो वासुदेवस्य क्षात्रकर्मचेष्टितम्, न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये तद्वत्तत्फलाभिसंध्यहंकाराभावस्य तुल्यत्वाद्विदुषः। तत्त्ववित्तु नाहं करोमीति मन्यते न च तत्फलमभिसंधत्ते। यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकामसाधनानुष्ठानायाऽऽहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति।

तथा च दर्शयति भगवान् 'कुर्वन्नपि' ( गी. ५.७ ) 'न करोति न लिप्यते' ( गी. १३.३१ ) इति तत्र तत्र। यच्च 'पूर्वैः पूर्वतरं कृतम्' ( गी. ४.१५ ) 'कर्मणैव हि संसिद्धिमास्थिताः

जनकादयः'( गी. ३.२० ) इति, तत्तु प्रविभज्य विज्ञेयम्। तत्कथम्? यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं 'गुणा गुणेषु वर्तन्ते' ( गी. ३.२८ ) इति ज्ञानेनैव संसिद्धिमास्थिताः कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिता, न कर्मसंन्यासं कृतवन्त इत्येषोऽर्थः। अथ न ते तत्त्वविद ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम्।

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ (गी. ५.११)

एतमेवार्थं वक्ष्यति भगवान्सत्त्वशुद्धये कर्म कुर्वन्तीति। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ( गी. १८. ४६ ) इत्युक्त्वा सिद्धिं प्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति 'सिद्धिं प्राप्तो यथा ब्रह्म' ( गी. १८.५० ) इत्यादिना। तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः। यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः।

॥ इति श्रीमद्भगवद्गीता सम्बन्धभाष्यम्॥

## *अथ श्रीमदाद्यशङ्कराचार्यविरचितं गीताभाष्यम्।*

तत्रैवं धर्मसंमूढचेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्राऽऽत्मज्ञानादुद्धरणमपश्यन्भगवान्वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—

**श्रीभगवानुवाच—**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादाँश्च भाषसे।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥११॥**

तब श्री भगवान् ने कहा कि— न शोक करने योग्यों के लिये इस प्रकार तुम शोक करते हो और साथ ही बुद्धिमानों जैसी बात

भी कर रहे हो। परन्तु आत्मज्ञानी पण्डित मरे हुए और जीवित के विषय में भी शोक नहीं करते हैं॥११॥

अशोच्यानित्यादि। न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात्परमार्थरूपेण च नित्यत्वात्, **तानशोच्यानन्वशोचोऽ**नुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति। **त्वं प्रज्ञावतां** बुद्धिमतां **वादांश्च** वचनानि च **भाषसे**। तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः। यस्माद्**गतासून्**गतप्राणान्मृता**नगतासून**गतप्राणाञ्जीवतश्च **नानुशोचन्ति पण्डिता** आत्मज्ञाः पण्डाऽऽत्मविषया बुद्धिर्येषां ते हि **पण्डिताः** "पाण्डित्यं निर्विद्य" ( बृ. ३.५.१ ) इति श्रुतेः। परमार्थतस्तु नित्यानशोच्याननुशोचस्यतो मूढोऽसीत्यभिप्रायः॥११॥

कुतस्तेऽशोच्याः? यतो नित्याः। कथम्?—

**न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम्॥१२॥**

मैं (तत्पदार्थ परमात्मा) किसी समय नहीं था, ऐसी बात नहीं है, वैसे तू और ये सब राजा नहीं थे, ऐसा नहीं है और भविष्य में भी हम सब लोग नहीं होंगे, ऐसा भी नहीं है॥१२॥

**न त्वेव जातु** कदाचि**दहं नाऽऽसं** किंत्वासमेवातीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्य एवाहमासमित्यभिप्रायः। तथा **न त्वं** नाऽऽसीः किं त्वासीरेव। तथा **नेमे जनाधिपा** नाऽऽसन्किं त्वासन्नेव। तथा **न चैव न भविष्यामः**, किंतु भविष्याम एव। **सर्वे वयमतो**ऽस्माद्देहविनाशात्**परमु**त्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः। देहभेदानुवृत्त्या बहुवचनं नाऽऽत्मभेदाभिप्रायेण॥१२॥

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥१३॥**

जिस प्रकार इस वर्तमान देह में देहविशिष्ट जीवात्मा की बाल्यावस्था, युवावस्था और वयोहानिरूप वृद्धावस्था होती है, वैसे ही इसे देहान्तर की प्राप्ति भी होती है, इस विषय में धीरपुरुष मोहित नहीं होते॥१३॥

**देहिन** इति। देहोऽस्यास्तीति देही तस्य **देहिनो** देहवदात्मनोऽ**स्मिन्**वर्तमाने **देहे यथा** येन प्रकारेण **कौमारं** कुमारभावो बाल्यावस्था, **यौवनं** यूनो भावो मध्यमावस्था, **जरा** वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणा-स्तासां प्रथमावस्थानाशे न नाशो, द्वितीयावस्थोपजनने नोपजनन-मात्मनः, किं तर्ह्यविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा, **तथा** तद्वदेव देहादन्यो देहान्तरं तस्य प्राप्तिर्**देहान्तर-प्राप्ति**रविक्रियस्यैवाऽऽत्मन इत्यर्थः। **धीरो** धीमांस्तत्रैवं सति **न मुह्यति** न मोहमापद्यते॥१३॥

यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मेति विजानतस्तथाऽपि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते, सुखवियोगनिमित्तो दुःखसंयोगनिमित्तश्च शोक इत्येत-दर्जुनस्य वचनमाशङ्क्याऽऽह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत॥१४॥**

हे कुन्तीपुत्र अर्जुन! इन्द्रियों का विषय के साथ संयोग होने पर जो शीत-उष्ण और सुख-दुःख होते हैं, वे आगमापायी होने से अनित्य हैं। अतः हे ज्ञान में रत रहने वाला अर्जुन! तू उन्हें सहन कर॥१४॥

**मात्रास्पर्शा** इति। **मात्रा** आभिर्मीयन्ते शब्दादय इति

इनके द्वारा नापा जाता है

श्रोत्रादीनीन्द्रियाणि, मात्राणां **स्पर्शाः** शब्दादिभिः संयोगास्ते **शीतोष्णसुखदुःखदाः**, शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति। अथवा स्पृश्यन्त इति **स्पर्शा** विषयाः शब्दादयः, मात्राश्च स्पर्शाश्च **शीतोष्णसुखदुःखदाः**, शीतं कदाचित्सुखं कदाचिद्दुःखं तथोष्णमप्यनियतरूपम्। सुखदुःखे पुनर्नियतरूपे, यतो न व्यभिचरतोऽतस्ताभ्यां पृथक्शीतोष्णयोर्ग्रहणम्। यस्मात्ते मात्रास्पर्शादय **आगमापायिन** आगमापायशीलास्तस्माद**नित्या** अतस्ताञ्शीतोष्णादीं**स्तितिक्षस्व** प्रसहस्व तेषु हर्षं विषादं च मा कार्षीरित्यर्थः ॥१४॥

शीतोष्णादीन्सहतः किं स्यादिति शृणु—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥१५॥**

हे पुरुषश्रेष्ठ अर्जुन! सुख-दुःख में समान रहने वाले जिस ज्ञानी पुरुष को शीतोष्णादि द्वन्द्व विचलित नहीं करते हैं वह (द्वन्द्वसहिष्णु पुरुष आत्मनिष्ठ हो) मोक्ष प्राप्ति के लिए समर्थ होता है॥१५॥

यं हीति। **यं हि पुरुषं समदुःखसुखं** समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं **धीरं** धीमन्तं **न व्यथयन्ति** न चालयन्ति नित्यात्मदर्शना**देते** यथोक्ताः शीतोष्णादयः, **स** नित्यात्मदर्शननिष्ठो द्वंद्वसहिष्णु**रमृतत्वाया**मृतभावाय मोक्षाय **कल्पते** समर्थो भवति॥१५॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं, यस्मात्—

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥१६॥**

शोक के कारण अनात्मवस्तु शीतोष्णादि का परमार्थतः अस्तित्व है ही नहीं और सत् आत्मा का कभी अभाव नहीं होता, इन दोनों का निर्णय तत्त्वदर्शियों द्वारा देखा गया है॥१६॥

वेदान्त - वेदानां अन्तः - निर्णयः।

मिथ्या - अविद्यमानत्वे सति भासमानत्वम् ।



**नासत** इति। **नासतो**ऽविद्यमानस्य शीतोष्णादेः सकारणस्य न **विद्यते** नास्ति **भावो** भवनमस्तिता। न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु संभवति।

विकारो हि सः; विकारश्च व्यभिचरति, यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन्, जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः। मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम्। तदसत्त्वे च सर्वाभावप्रसङ्ग इति चेत्। न, सर्वत्रबुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति। यद्विषया बुद्धिर्न व्यभिचरति तत्सत्, यद्विषया बुद्धिर्व्यभिचरति तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे।

न नीलोत्पलवत्सन्घटः सन्पटः सन्हस्तीति। एवं सर्वत्र। तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति, तथा च दर्शितम्; न तु सद्बुद्धिः; तस्माद्घटादिबुद्धिविषयोऽसन्व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात्। घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत्; न, पटादावपि सद्बुद्धिदर्शनात्; विशेषणविषयैव सा सद्बुद्धिः। सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेत्। न, पटादावदर्शनात्।

सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत्। न, विशेष्याभावात्। सद्बुद्धिविशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्, नतु पुनः सद्बुद्धेर्विषयाभावात्। एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत्। नेदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात्। तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति।

तथा **सतश्चा**ऽऽत्मनो**ऽभावो**ऽविद्यमानता **न विद्यते** सर्वत्राव्यभिचारादित्यवोचाम। एवमात्मानात्मनोः सदसतो**रुभयोरपि**

**दृष्ट** उपलब्धोऽ**न्तो** निर्णयः सत्सदेवासदसदेवेति **त्वनयोर्य**थोक्तयो**स्तत्त्वदर्शिभिः**। तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिः। त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वंद्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्याऽवभासत इति मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः॥१६॥

किं पुनस्तद्यत्सदेव सर्वदैवास्तीति, उच्यते—

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥१७॥**

जिस सदात्मा से यह सम्पूर्ण जगत् व्याप्त है उस अव्यय आत्मा का विनाश कोई कर नहीं सकता। उसी सदात्मा को अविनाशी जान॥१७॥

**अविनाशीति। अविनाशि** न विनष्टुं शीलमस्येति। **तु**-शब्दोऽसतो विशेषणार्थः। **तद्विद्धि** विजानीहि। किं; **येन सर्वमिदं** जग**त्ततं** व्याप्तं सदाख्येन ब्रह्मणा साकाशमाकाशेनेव घटादयः। **विनाश**मदर्शनमभाव**मव्ययस्य** न व्येति, उपचयापचयौ न यातीत्यव्ययं तस्याव्ययस्य। नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति निरवयवत्वाद्देहादिवत्। नाप्यात्मीयेनाऽऽत्मीयाभावाद्यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं **न कश्चित्कर्तुमर्हति** न कश्चिदात्मानं विनाशयितुं शक्नोतीश्वरोऽपि, आत्मा हि ब्रह्म, स्वात्मनि च क्रियाविरोधात्॥१७॥

किं पुनस्तदसद्, यत्स्वात्मसत्तां व्यभिचरति इति उच्यते—

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥१८॥**

नित्य, अविनाशी, अप्रमेय शरीरी के ये सभी देह अन्तवान् कहे गये हैं, अतः हे भारत! तू क्षात्रधर्मकर्त्तव्यरूप युद्ध को कर॥१८॥

**अन्तवन्त** इति। **अन्तवन्तो**ऽन्तो विनाशो विद्यते येषां तेऽन्तवन्तः। यथा मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाण-निरूपणान्ते विच्छिद्यते स तस्या अन्तस्त**थेमे देहाः** स्वप्न-मायादेहादिवच्चान्तवन्तः। **नित्यस्य शरीरिणः** शरीरवतोऽ-**नाशिनोऽप्रमेयस्या**ऽन्तवन्त **इत्युक्ता** विवेकिभिरित्यर्थः। नित्यस्यानाशिन इति न पुनरुक्तं नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च। यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते, विद्यमानोऽप्यन्यथापरिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते। तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासंबन्धोऽस्येत्यर्थः।

अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्मा भूदिति नित्यस्यानाशिन इत्याह। **अप्रमेयस्य** न प्रेमयस्य प्रत्यक्षा-दिप्रमाणैरपरिच्छेद्यस्येत्यर्थः। नन्वागमेनाऽऽत्मा परिच्छिद्यते प्रत्यक्षादिना च पूर्वम्। न, आत्मनः स्वतः सिद्धत्वात्। सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति। न हि पूर्वमित्थमहमित्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। न ह्यात्मा नाम कस्यचिदप्रसिद्धो भवति।

शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मनि प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन। तथा च श्रुतिः—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" (बृ. ३. ४.२) इति। यस्मादेवं नित्योऽविक्रियश्चाऽऽत्मा **तस्माद्युध्यस्व** युद्धादुपरमं मा कार्षीरित्यर्थः। न ह्यत्र युद्धकर्त्तव्यता विधीयते। युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते, तस्य कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते। तस्माद्युध्यस्वेत्यनु-वादमात्रं न विधिः॥१८॥



शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान्। यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्तेऽहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते, कथम्—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ १९॥

इस प्रकृत देही को जो मारने वाला जानता है और जो इसे मरा हुआ मानता है, वे (हनन क्रिया का कर्ता और हनन क्रिया का कर्म मानने वाले) दोनों ही इस बात को (अविवेक के कारण) नहीं जानते हैं कि यह आत्मा वस्तुतः न हनन क्रिया का कर्ता है और न हनन क्रिया का कर्म ही है (यह तो सभी विकारों से सर्वथा मुक्त है) ॥१९॥

य एनमिति। **य एनं** प्रकृतं देहिनं **वेत्ति** जानाति **हन्तारं** हननक्रियायाः कर्तारं, **यश्चैनमन्यो मन्यते हतं** देहहननेन हतोऽहमिति हननक्रियायाः कर्मभूतं, **तावुभौ न विजानीतो** न ज्ञातवन्तावविवेकेनाऽऽत्मानमहंप्रत्ययविषयं हन्ताऽहं, हतोऽस्म्यहमिति देहहननेनाऽऽत्मानमहंप्रत्ययविषयं यौ विजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थः। **यस्मान्नायमात्मा हन्ति** न हननक्रियायाः कर्ता भवति, **न हन्यते** न च **कर्म** भवतीत्यर्थः। अविक्रियत्वात्॥१९॥

कथमविक्रय आत्मेति द्वितीयो मन्त्रः—

न जायते म्रियते वा कदाचि—
न्नायं भूत्वाऽभविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे॥२०॥

यह प्रकृत आत्मा न कभी जन्मता है और न कभी मरता है; वैसे ही, होकर पुनः किसी विकार को भी प्राप्त नहीं होता क्योंकि यह अजन्मा, नित्य, शाश्वत और पुराण है। शरीर के मारे जाने पर भी यह कभी मरता नहीं॥२०॥

**न जायते** नोत्पद्यते जनिलक्षणा वस्तुविक्रिया नाऽऽत्मनो विद्यत इत्यर्थः। न **म्रियते वा**। वाशब्दश्चार्थे। न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते। **कदाचिच्छब्दः** सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवम्। यस्माद**यमात्मा भूत्वा** भवनक्रियामनुभूय पश्चाद**भविता**ऽभावं गन्ता **न भूयः** पुनस्तस्मान्न म्रियते। यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके। वाशब्दान्नशब्दाच्चायमात्माऽभूत्वा भविता वा देहवन्न भूयः पुनस्तस्मान्न जायते। यो ह्यभूत्वा भविता स जायत इत्युच्यते। नैवमात्माऽतो न जायते। यस्मादेवं तस्मा**दजो**, यस्मान्न म्रियते तस्मा**न्नित्यश्च**।

यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति, तथाऽपि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव तदर्थैः प्रतिषेधः कर्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह **शाश्वत** इत्यादिना। **शाश्वत** इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वतः। नापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेणापक्षयः। अपक्षयविपरीताऽपि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते **पुराण** इति। यो ह्यवयवाऽऽगमेनोपचीयते स वर्धतेऽभिनव इति चोच्यते। अयं त्वात्मा निरवयवत्वात्पुराऽपि नव एवेति पुराणो न वर्धत इत्यर्थः। तथा न **हन्यते** न विपरिणम्यते

व्याप्य व्यापक भावो मिथ्या।



**हन्यमाने** विपरिणम्यमानेऽपि **शरीरे**। हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै न विपरिणम्यत इत्यर्थः। अस्मिन्मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते। सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः। यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य संबन्धः॥२०॥

'य एनं वेत्ति हन्तारम्' ( गी. २.१९ ) इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय 'न जायते' ( गी. २.२० ) इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—

**वेदाविनाशिनं नित्यं य एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥२१॥**

हे पार्थ! जो इस प्रकृत आत्मा को अन्त्यभावविकाररहित एवं विपरिणाम रहित जानता है ऐसे ही जन्मरहित, अपक्षयरहित आत्मा को जानता है, (वह विद्वान् अधिकृत पुरुष) किस प्रकार हनन क्रिया का कर्त्ता बनेगा और किस प्रकार हनन क्रिया का प्रयोजक बनेगा अर्थात् किसी भी प्रकार से वह न किसी को मारता है और न किसी को मरवाता है॥२१॥

वेदाविनाशिनमिति। **वेद** विजानात्य**विनाशिनम्**अन्त्यभावविकाररहितं **नित्यं** विपरिणामरहितं **यो** वेदेति संबन्धः। **एनं** पूर्वेण मन्त्रेणोक्तलक्षण**मजं** जन्मरहित**मव्ययम्**अपक्षयरहितं, **कथं** केन प्रकारेण **स** विद्वान्**पुरुषो**ऽधिकृतो **हन्ति** हननक्रियां करोति। कथं वा **घातयति** हन्तारं प्रयोजयति। न कथंचित्कंचिद्धन्ति, न कथंचित्कंचिद्घातयतीत्युभयत्राऽऽक्षेप एवार्थः, प्रश्नार्थासंभवात्। हेत्वर्थस्याविक्रियत्वस्य तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः। हंतेस्त्वाक्षेप

कर्त्ता नहीं, कारयिता नहीं,
कर्मत्व, कर्तृत्व, कारयितृत्व

उदाहरणार्थत्वेन। विदुषः कं कर्मासंभवे हेतुविशेषं पश्यन्कर्माण्याक्षिपति भगवान्कथं स पुरुष इति। ननूक्त एवाऽऽत्मनोऽविक्रियत्वं सर्वकर्मासंभवकारणविशेषः, सत्यमुक्तो न तु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मन इति। न ह्यविक्रियं स्थाणुं विदितवतः कर्म न संभवतीति चेत्। न। विदुष आत्मत्वात्। न देहादिसंघातस्य विद्वत्ता। अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासंभवादाक्षेपो युक्तः कथं स पुरुष इति। यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धाऽऽत्मा कल्प्यते। एवमेवाऽऽत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्याऽविद्ययाऽसत्यरूपयैव परमार्थतोऽविक्रिय एवाऽऽत्मा विद्वानुच्यते। विदुषः कर्मासंभववचनाद्यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते।

ननु विद्याऽप्यविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात्। तत्राविदुषः कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते। न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः। अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्ताऽहं मम कर्तव्यमित्येवंप्रकारविज्ञानवतोऽविदुषो यथाऽनुष्ठेयं भवति, न तु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति। किंतु नाहं कर्ता न भोक्तेत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यत इत्येष विशेष उपपद्यते। यः पुनः कर्ताऽहमिति वेत्त्यात्मानं तस्य ममेदं कर्त्तव्यमित्यवश्यंभाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि। स चाविद्वान्—'उभौ तौ न विजानीतः' (गी. २.१९) इति वचनात्। विशेषितस्य च

विदुषः कर्माक्षेपवचनात् 'कथं स पुरुषः' ( गी. २.२१ ) इति। तस्माद्विशेषितस्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः। अत एव भगवान्नारायणः सांख्यान्विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन सांख्यानां कर्मयोगेन( ण ) योगिनाम्' ( गी. ३.३ ) इति। तथा च पुत्रायाऽऽह—भगवान्व्यासः— 'द्वाविमावथ पन्थानौ' ( महा. शान्ति. २४१.६ ) इत्यादि। तथा च 'क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्च' ( तै. आ. १०.६२.१२ ) इति। एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान्। अतत्त्वविद् 'अहंकारविमूढात्मा कर्ताऽहमिति मन्यते' ( गी. ३.२७ ), 'तत्त्ववित्तु' ( गी. ३.२८ ) नाहं करोमीति। तथा च 'सर्वकर्माणि मनसा संन्यस्याऽऽस्ते' ( गी. ५.१३ ) इत्यादि।

तत्र केचित्पण्डितंमन्या वदन्ति जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसंन्यास उपदिश्यते। तन्न। 'न जायत' इत्यादिशास्त्रोपदेशानर्थक्यात्। यथा च शास्त्रोपदेशसामर्थ्याद्धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धिज्ञानं चोत्पद्यते, तथा शास्त्रात्तस्यैवाऽऽत्मनोऽविक्रियत्वाकर्तृत्वैकत्वादि विज्ञानं कस्मान्नोत्पद्यत इति प्रष्टव्यास्ते। करणागोचरत्वादिति चेत् न, 'मनसैवानुद्रष्टव्यम् ( बृ. ४.४.१९ ) इति श्रुतेः। शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम्। तथा च तदधिगमायानुमान आगमे च सति ज्ञानं नोत्पद्यत इति साहसमेतत्। ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम्। तच्चाज्ञानं दर्शितं हन्ताऽहं हतोऽस्मीति 'उभौ तौ न विजानीतः' ( गी. २.१९ ) इति। अत्र चाऽऽत्मनो हननक्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वं चाज्ञानकृतं दर्शितम्।

तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः। विक्रियावान्हि कर्ताऽऽत्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति। तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्विदुषः कर्माधिकाराभावप्रदर्शनार्थं 'वेदाविनाशिनं' 'कथं स पुरुषः' (गी. २.२१) इत्यादिना। क्व पुनर्विदुषोऽधिकारः? इत्येतदुक्तं पूर्वमेव 'ज्ञानयोगेन सांख्यानाम्' (गी. ३.३) इति। तथा च सर्वकर्मसंन्यासं वक्ष्यति 'सर्वकर्माणि मनसा' (गी. ५.१३) इत्यादिना।

ननु मनसेति वचनान्न वाचिकानां कायिकानां च संन्यास इति चेत्, न, सर्वकर्माणीति विशेषितत्वात्। मानसानामेव सर्वकर्मणामिति चेत्, न मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तेः। शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि वर्जयित्वाऽन्यानि 'सर्वकर्माणि मनसा संन्यसेदिति' चेत्, न, 'नैव कुर्वन्न कारयन्' (गी. ५.१३) इति विशेषणात्। सर्वकर्मसंन्यासोऽयं भगवतोक्तो मरिष्यतो न जीवत इति चेत्, न 'नवद्वारे पुरे देह्यास्त' इतिविशेषणानुपपत्तेः।

न हि सर्वकर्मसंन्यासेन मृतस्य तद्देह आसनं संभवति। अकुर्वतोऽकारयतश्च, देहे संन्यस्येति संबन्धो न देह आस्त इति चेत्, न, सर्वत्राऽऽत्मनोऽविक्रियत्वावधारणात्। आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य। संपूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थः। तस्माद्गीताशास्त्र आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥२१॥

**प्रथमाह्निकम् ॥ १ ॥**

☆☆☆☆☆

प्रकृतं तु वक्ष्यामः, तत्राऽऽत्मनोऽविनाशित्वं प्रतिज्ञातं, तत्किमिवेत्युच्यते—

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही॥२२॥**

जिस प्रकार मनुष्य पुराने वस्त्रों को छोड़कर दूसरे नये वस्त्रों को ग्रहण करता है, वैसे ही देहाभिमानी जीव पुराने शरीरों को छोड़कर दूसरे नये शरीरों में चला जाता है॥२२॥

**वासांसीति।** **वासांसि** वस्त्राणि **जीर्णानि** दुर्बलतां गतानि **यथा** लोके **विहाय** परित्यज्य **नवान्यभिनवानि गृह्णात्युपादत्ते नरः** पुरुषो**ऽपराण्यन्यानि तथा** तद्वदेव **शरीराणि विहाय जीर्णान्यन्यानि संयाति** संगच्छति **नवानि देह्यात्मा** पुरुषवदविक्रिय एवेत्यर्थः॥२२॥

कस्मादविक्रिय एवेति। आह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥२३॥**

इस देही को शस्त्र काट नहीं सकते (क्योंकि यह निरवयव है), वैसे ही आत्मा को अग्नि भी भस्मसात् नहीं कर सकती और न इसे जल ही गीला कर सकता है। इस आत्मा को वायु भी स्नेह शोषण पूर्वक नाश नहीं कर सकता॥२३॥

**नैनं छिन्दन्तीति।** **एनं** प्रकृतं देहिनं **न छिन्दन्ति शस्त्राणि** निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि। तथा **नैनं दहति पावको**ऽग्निरपि न भस्मीकरोति। तथा

**नैनं क्लेदयन्त्यापः**। अपां हि सावयवस्य वस्तुन आर्द्री-भावकरणेनावयवविश्लेषापादने सामर्थ्यं, तन्न निरवयव आत्मनि संभवति। तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुः, एनं त्वात्मानं न **शोषयति मारुतो**ऽपि आकाशवत्॥२३॥

यत एवं तस्मात्—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥२४॥**

अतः यह आत्मा अच्छेद्य है। यह अदाह्य है, अक्लेद्य और अशोष्य भी है। इसलिए यह नित्य है। नित्य होने से यह व्यापक है, (परमाणु के समान परिच्छिन्न नहीं है)। सर्वव्यापक होने से स्थाणु की भाँति स्थिर है एवं स्थिर होने से यह आत्मा अचल है तथा चिरन्तन भी है॥२४॥

**अच्छेद्योऽयमिति**। यस्मादन्योन्यनाशहेतूनि भूतान्येन-मात्मानं नाशयितुं नोत्सहन्ते, तस्मा**न्नित्यो** नित्यत्वात्**सर्वगतः** सर्वगतत्वात्**स्थाणुः** स्थाणुरिव स्थिर इत्येतत्। स्थिरत्वा-**दचलो**ऽयमात्माऽतः **सनातन**श्चिरंतनो न कारणात्कुतश्चि-न्निष्पन्नोऽभिनव इत्यर्थः। नैतेषां श्लोकानां पौनरुक्त्यं चोद-नीयम्। यत एकेनैव श्लोकेनाऽऽत्मनो नित्यत्वमविक्रियत्वं चोक्तं 'न जायते म्रियते वा' इत्यादिना। तत्र यदेवाऽऽत्मविषयं किंचि-दुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते, किंचिच्छब्दतः पुनरुक्तं किंचिदर्थत इति। दुर्बोधत्वादात्मवस्तुनः। पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः कथं नु नाम संसारिणामव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं सत्संसार-निवृत्तये स्यात् इति॥२४॥

किंच—

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥**

(यह आत्मा सभी चक्षुरादि करणों का अविषय होने से अव्यक्त है, इसीलिए यह अचिन्त्य भी है, अविक्रिय होने के कारण यह आत्मा अविकार्य है)। जब यह आत्मा अव्यक्त, अचिन्त्य, अविकार्य, नित्य, सर्वव्यापक निश्चित हो गया तो इसी रूप में उसे जानना चाहिए और ऐसा इस आत्मा को समझ लेने पर तू इस सम्बन्ध में शोक करने योग्य नहीं॥२५॥

**अव्यक्तोऽयमिति।** अव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यत इत्यव्यक्तोऽयमात्मा। अत **एवाचिन्त्योऽयम्।** यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्वमापद्यते। अयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्यः। **अविकार्योऽयम्।** यथा क्षीरं दध्यातञ्चनादिना विकारि। न तथाऽयमात्मा। निरवयवत्वाच्चाविक्रियः। न हि निरवयवं किंचिद्विक्रियात्मकं दृष्टम्। अविक्रियत्वादविकार्योऽयमात्मोच्यते। **तस्मादेवं** यथोक्तप्रकारेणैनमात्मानं **विदित्वा** त्वं **नानुशोचितुमर्हसि** हन्ताऽहमेषां मयेमे हन्यन्त इति॥२५॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।**
**तथाऽपि त्वं महाबाहो नैवं शोचितुमर्हसि॥२६॥**

यदि इस आत्मा को लोकप्रसिद्धि के अनुसार प्रत्येक शरीर की उत्पत्ति के साथ उत्पन्न होने वाला मानो और प्रत्येक शरीर के नाश के साथ ही इसको मरा हुआ समझो, तो ऐसे आत्मा के विषय में भी हे महाबाहो! तुम्हें शोक नहीं करना चाहिए॥२६॥

**अथ चैनमिति। अथ** चेत्यभ्युपगमार्थः। **एनं** प्रकृत-

मात्मानं **नित्यजातं** लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति वा मन्यसे? तथा प्रतितद्विनाशं **नित्यं वा मन्यसे मृतं** मृतो मृत इति? **तथाऽपि** तथाभाविन्यप्यात्मनि **त्वं महाबाहो! नैवं शोचितुमर्हसि** जन्मवतो जन्म नाशवतो नाशश्चेत्येतावश्यंभाविनाविति॥२६॥

तथा च सति—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥२७॥

क्योंकि जन्मने वाले का निश्चित मरण और मरने वाले का निश्चित जन्म होता ही है। अतः यह अर्थ अपरिहार्य है। इसलिए अर्जुन! इस सम्बन्ध में तुझे शोक नहीं करना चाहिए॥२७॥

जातस्येति। **जातस्य हि** लब्धजन्मनो **ध्रुवो**ऽव्यभिचारी **मृत्यु**र्मरणं **ध्रुवं जन्म मृतस्य च, तस्माद**परिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्न**परिहार्येऽर्थे न त्वं शोचितुमर्हसि**॥२७॥

कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं, यतः—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥२८॥

हे ज्ञान में रत रहने वाला अर्जुन! ये सभी भूत जन्म से पहले अव्यक्त ही तो थे, बीच में व्यक्त हुये और मरण के बाद पुनः अव्यक्त हो जायेंगे; तो इस सम्बन्ध में शोक क्यों किया जाय॥२८॥

अव्यक्तादीनीति। **अव्यक्तादीन्य**व्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तान्य-

पूर्व जन्म को [illegible] करने के लिए [illegible], [illegible]
पाठ्यक्रम का फल विश्व के सभी लोग [illegible]



व्यक्तादीनि भूतानि प्रागुत्पत्तेः। उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यानि। अव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि मरणादूर्ध्वमप्यव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः।

तथा चोक्तम्—

अदर्शनादापतितः पुनश्चादर्शनं गतः।
नासौ तव न तस्य त्वं वृथा का परिदेवना॥

( महा. स्त्री. २.१३ ) इति तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः॥२८॥

दुर्विज्ञेयोऽयं प्रकृत आत्मा, किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते? कथं दुर्विज्ञेयोऽयमात्मा? इत्यत आह—

**आश्चर्यवत्पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥२९॥**

कोई-कोई इस आत्मा को आश्चर्य की भाँति देखता है, वैसे ही दूसरा आश्चर्य की भाँति बोलता है और तीसरा आश्चर्य की भाँति इस आत्मा को सुनता है, पर कोई-कोई इसे सुनकर भी नहीं जान पाता॥२९॥

आश्चर्यवदिति। **आश्चर्यवदाश्चर्यमदृष्टमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं पश्यति कश्चित्। आश्चर्यवदेनं वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति। श्रुत्वा दृष्ट्वोक्त्वाऽप्येनं वेद न चैव कश्चित्।** अथवा योऽयमात्मानं पश्यति स

ऋषि प्रणीत
भारतीय जीवन शैली व्यक्ति को ब्रह्म बनाने के लिए है। व्यक्ति, परिवार
समाज सभी को [illegible] आत्मोन्मुख बनाता है। यही जीवन शैली
विकसित [illegible]

आश्चर्यतुल्यो, यो वदति, यश्च शृणोति, सोऽनेकसहस्रेषु कश्चिदेव भवति। अतो दुर्बोध आत्मेत्यभिप्रायः॥२९॥

अथेदानीं प्रकरणार्थमुपसंहरन्ब्रूते—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥३०॥**

हे ज्ञान में रत रहने वाले अर्जुन! सभी के शरीर में यह शरीरी आत्मा अवध्य है। अतः सभी भूतों के विषय में तुम्हें शोक नहीं करना चाहिए॥३०॥

देहीति। **देही** शरीरी **नित्यं** सर्वदा सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च तत्रा**वध्योऽयं देहे** शरीरे **सर्वस्य** सर्वगतत्वात्स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि **सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि**॥३०॥

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न संभवती-त्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव; किंतु—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥३१॥**

न केवल परमार्थ तत्त्व की अपेक्षा से शोक मोह नहीं करना चाहिए किन्तु स्वधर्म को देखकर भी तुझे इस प्रकार विचलित नहीं होना चाहिए, क्योंकि धर्मयुक्त युद्ध से बढ़कर दूसरा कोई कल्याणकारक साधन क्षत्रिय के लिए नहीं है॥३१॥

स्वधर्ममिति। **स्वधर्ममपि** स्वो धर्मः क्षत्रियस्य युद्धं तम-प्यवेक्ष्य **त्वं न विकम्पितुं** प्रचलितुं **नार्हसि**। स्वाभावि-काद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः। तच्च युद्धं पृथिवीजयद्वारेण

**धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यं तस्माद्धर्म्या-द्युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते हि यस्मात्॥३१॥**

**कुतश्च तद्युद्धं कर्त्तव्यम्? इति। उच्यते—**

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥३२॥**

बिना चाहे यह युद्ध जो प्राप्त हो गया है यह खुले हुए स्वर्ग द्वार के समान है और हे पृथापुत्र अर्जुन! ऐसा युद्ध भाग्यशाली क्षत्रिय ही प्राप्त करते हैं, (जिन्हें ऐसा युद्ध प्राप्त हो गया वे क्यों नहीं सुखी माने जायेंगे)॥३२॥

**यदृच्छयेति। यदृच्छया चाप्रार्थितयोपपन्नमागतं स्वर्ग-द्वारमपावृतमुद्घाटितं ये तदीदृशं युद्धं लभन्ते क्षत्रिया हे पार्थ! किं न सुखिनस्ते॥३२॥**

**एवं कर्तव्यताप्राप्तमपि—**

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥३३॥**

युद्ध कर्तव्यता प्राप्त है, फिर भी यदि तुम इस धर्मयुक्त युद्ध को न करोगे तो स्वधर्म एवं कीर्ति का परित्याग कर पाप के भागी बनोगे॥३३॥

**अथ चेत्त्वमिमं धर्म्यं धर्मादनपेतं संग्रामं युद्धं न करिष्यसि चेत्ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवा-दिसमागमादिनिमित्तां हित्वा केवलं पापमवाप्स्यसि॥३३॥**

**न केवलं स्वधर्मकीर्तिपरित्यागः—**

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते॥३४॥**

(धर्मयुद्ध न करने पर क्षत्रिय को पाप लगता है। इतना ही नहीं,

सम्मानित - जनैः सम्यक् रूपेण मानितः ।

शिष्टपुरुषों द्वारा निन्दित भी है। अतः केवल स्वधर्म और कीर्ति का परित्याग ही नहीं, अपितु) तेरी दीर्घकालीन भावी अकीर्ति को भी लोग कहेंगे, जो संभावित पुरुष के लिए मरण से भी अधिक दुःखदायी मानी जाती है॥३४॥

**अकीर्तिं चापि भूतानि कथयिष्यन्ति ते तवाव्ययां** दीर्घकालाम्। धर्मात्मा शूर इत्येवमादिभिर्गुणैः **संभावितस्य चाकीर्तिर्मरणादतिरिच्यते**। संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः॥३४॥

किंच—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्॥३५॥**

(इसलिए भी तुझे युद्ध करना ही चाहिए क्योंकि) दुर्योधनादि महारथ तुझे कर्णादि वीरों से भयभीत हो रण से भागा हुआ मानेंगे। जिन दुर्योधनादि की दृष्टि में तू अनेक गुणों से युक्त माना जाता था, अब उन्हीं की दृष्टि में तुम लघुता को प्राप्त हो जाओगे॥३५॥

भयादिति। **भयात्**कर्णादिभ्यो **रणाद्**युद्धा**दुपरतं** निवृत्तं **मंस्यन्ते** चिन्तयिष्यन्ति न कृपयेति **त्वां महारथा** दुर्योधनप्रभृतयः। **येषां च त्वं** दुर्योधनादीनां **बहुमतो** बहुभिर्गुणैर्युक्त इत्येवं बहुमतो **भूत्वा** पुन**र्यास्यसि लाघवं** लघुभावम्॥३५॥

किंच—

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्॥३६॥**

(इसलिए भी तुझे युद्ध से उपरत नहीं होना चाहिए क्योंकि) तेरे शत्रु तेरी शक्ति की निन्दा करते हुए न कहने योग्य अनेक बातों को कहेंगे, उससे बढ़कर और क्या दुःख हो सकता है॥३६॥

अवाच्यवादानिति। **अवाच्यवादान**वक्तव्यवादांश्च **बहू**ननेकप्रकारा**न्वदिष्यन्ति तवाहिताः** शत्रवो **निन्दन्तः** कुत्सयन्त**स्तव** त्वदीयं **सामर्थ्यं** निवातकवचादियुद्धनिमित्तम्। तस्मा**त्ततो** निन्दाप्राप्तेर्दुःखाद् **दुःखतरं नु किम्**? ततः कष्टतरं दुःखं नास्तीत्यर्थः॥३६॥

युद्धे पुनः क्रियमाणे कर्णादिभिः—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥३७॥

कर्णादि वीरों के साथ युद्ध करने पर मरकर स्वर्ग प्राप्त करोगे अथवा उन्हें जीतकर पृथ्वी को भोगोगे। अतः हे कुन्ती पुत्र अर्जुन! कृतनिश्चय हो युद्ध के लिए तुम खड़े हो जाओ॥३७॥

हतो वेति। **'हतो वा प्राप्स्यसि स्वर्गं'** हतः सन्स्वर्गं प्राप्स्यसि **जित्वा वा** कर्णादीञ्शूरा**न्भोक्ष्यसे महीम्**। उभयथाऽपि तव लाभ एवेत्यभिप्रायः। यत एवं **तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयो** जेष्यामि शत्रून्मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः॥३७॥

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥३८॥

सुख और दुःख में राग-द्वेष न कर लाभ और हानि तथा जय और पराजय में भी वैसे ही समबुद्धि रहकर तत्पश्चात् स्वधर्म युद्ध के लिए प्रयत्न कर। ऐसा करने पर तू पाप को प्राप्त नहीं करेगा॥३८॥

सुखदुःखे इति। **सुखदुःखे समे** तुल्ये **कृत्वा**, रागद्वेषावकृत्वेत्येतत्। तथा **लाभालाभौ जयाजयौ** च समौ

**कृत्वा ततो युद्धाय युज्यस्व घटस्व। नैवं युद्धं कुर्वन्पापमवाप्स्यसीत्येष उपदेशः प्रासङ्गिकः॥३८॥**

शोकमोहापनयनाय लौकिको न्यायः 'स्वधर्ममपि चावेक्ष्य, इत्याद्यैः श्लोकैरुक्तो, न तु तात्पर्येण। परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियत एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय। इह हि दर्शिते पुनः शास्त्रविषयविभाग उपरिष्टात् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' (गी. ३.३) इति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीत्यत आह—

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥३९॥**

यह बुद्धि तेरे लिए सांख्य के विषय में अब तक बतलायी गयी, अब कर्मयोग और समाधियोग के सम्बन्ध में तू इसे सुन। हे पार्थ! जिस बुद्धि से युक्त हुआ तू पुण्यपापात्मक कर्मबन्धन को सर्वथा छोड़ दोगे॥३९॥

एषा त इति। **एषा ते** तुभ्य**मभिहितो**क्ता **सांख्ये** परमार्थवस्तुविवेकविषये **बुद्धि**र्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम्। **योगे तु** तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च**मा**मनन्तरमेवोच्यमानां बुद्धिं **शृणु**। तां बुद्धिं स्तौति प्ररोचनार्थं **बुद्ध्या यया** योगविषयया **युक्तो हे पार्थ! कर्मबन्धं** कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं **प्रहास्यसी**श्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः॥३९॥

किंचान्यत्—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥४०॥

(जिस प्रकार खेती आदि का काम थोड़ा करने से फल नहीं देता, पूरा करने पर ही फल मिलता है, कर्मयोग के विषय में वैसी बात नहीं है।) इसका प्रारम्भ अनैकान्तिक (संशययुक्त फल वाला) नहीं है (और चिकित्सा की भाँति) इसमें प्रत्यवाय नहीं है। इस कर्मयोग का थोड़ा भी अनुष्ठान जन्म मरणादिरूप संसार के महान् भय से (सम्यग्ज्ञान उत्पत्ति द्वारा) रक्षा करता है॥४०॥

नेहाभीति। **नेह** मोक्षमार्गे कर्मयोगे**ऽभिक्रमनाशो**ऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य **नाशो नास्ति**। यथा कृष्यादेः योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः। किंच नापि चिकित्सावत्**प्रत्यवायो विद्यते**। किंतु भवति **स्वल्पमप्यस्य** योग**धर्मस्या**नुष्ठिते **त्रायते** रक्षति **महतः** संसार**भया**ज्जन्ममरणादिलक्षणात्॥४०॥

येयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा, सा—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥४१॥

(सांख्य के विषय में जो बुद्धि अब तक कही गयी और योग के सम्बन्ध में जो आगे कही जायेगी) वह कल्याणमार्ग कर्मयोग साधन में निश्चयात्मिका एक ही है। किन्तु हे कुरुवंश को आनन्दित करने वाले अर्जुन! अव्यवसायियों की बुद्धि अनेक शाखा वाली और अनन्त है॥४१॥

व्यवसायेति। **व्यवसायात्मिका** निश्चयस्वभावै**कै**व **बुद्धि**रितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक्प्रमाणजनितत्वा**दिह** श्रेयोमार्गे हे **कुरुनन्दन**! याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपारोऽनुपरतः संसारो नित्यप्रततो

मोक्ष - परिस्थिति रहित जीवन - स्वरूपसिद्ध ज्ञान स्वरूप आनन्द स्वरूप इत्यादि।



विस्तीर्णो भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते। ता बुद्धयो **बहुशाखा** बह्व्यः शाखा यासां ता बहुशाखाः बहुभेदा इत्येतत्। प्रतिशाखाभेदेन **ह्यनन्ताश्च बुद्धयः**। केषाम्? **अव्यवसायिनां** प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः॥४१॥

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः॥४२॥

हे पार्थ! पुष्पित वृक्ष की भाँति केवल सुनने में रमणीय, (आगे कही जाने वाली) जिस वाणी को अविवेकी लोग बोलते हैं, वे (अनेक अर्थवाद, फल, एवं साधन के प्रकाशक) वेदवाक्यों में अनुरक्त हैं। स्वर्ग, पशु आदि फल के साधन कर्मों से भिन्न कोई साधन ही नहीं है, ऐसा बोलने वाले, (ईश्वर या मोक्ष के प्रति भी आस्था न रखने वाले, ये अज्ञानी जीव) हैं॥४२॥

यामिति। **यामिमां** वक्ष्यमाणां **पुष्पितां** पुष्पितवृक्ष इव शोभमानां श्रूयमाणरमणीयां **वाचं** वाक्यलक्षणां **प्रवदन्ति**। के? **अविपश्चितो**ऽल्पमेधसोऽविवेकिन इत्यर्थः। **वेदवादरता** बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रता हे **पार्थ! नान्यत्**स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्यो**ऽस्तीत्येवंवादिनो** वदनशीलाः॥४२॥

ते च—

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥४३॥

ये भोगासक्त, स्वर्ग को श्रेष्ठ मानने वाले, जन्मरूप कर्मफल देने वाली, क्रियाविशेष से बहुल, स्वर्ग एवं ऐश्वर्य की प्राप्ति कराने वाली वाणी ही बोलते हैं॥४३॥

कामात्मान इति। **कामात्मानः** कामस्वभावाः कामपरा इत्यर्थः। **स्वर्गपराः** स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधानाः **जन्मकर्मफलप्रदां** कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते। **क्रियाविशेषबहुलां** क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां स्वर्गपशु-पुत्राद्यर्था यया वाचा बाहुल्येन प्रकाश्यन्ते। **भोगैश्वर्यगतिं प्रति** भोगश्चैश्वर्यं च भोगैश्वर्ये तयोर्गतिः प्राप्तिर्भोगैश्वर्य-गतिस्तां प्रति साधनभूता ये क्रियाविशेषास्तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्तन्त इत्यभिप्रायः ॥४३॥

तेषां च—

**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥४४॥**

पिछले श्लोक में बतलायी गयी पुष्पित वाणी से जिनका चित्त अपहृत हो गया है ऐसे भोग-ऐश्वर्य में सर्वथा आसक्त जीव के अन्तःकरण में सांख्य अथवा कर्मयोगविषयक व्यवसायात्मिका बुद्धि कभी भी नहीं हो सकती॥४४॥

भोगेति। **भोगैश्वर्यप्रसक्तानां** भोगः कर्तव्यमैश्वर्यं चेति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानां **तया** क्रियाविशेष-बहुलया वाचाऽ**पहृतचेतसा**माच्छादितविवेकप्रज्ञानां **व्यव-सायात्मिका** सांख्ये योगे वा **बुद्धिः** **समाधौ** समा-धीयतेऽस्मिन्पुरुषोपभोगाय सर्वमिति समाधिरन्तःकरणं बुद्धि-स्तस्मिन्समाधौ **न** **विधीयते** न भवतीत्यर्थः ॥४४॥

य एवं विवेकबुद्धिरहितास्तेषां कामात्मनां यत्फलं तदाह—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥४५॥

(जो इस प्रकार विवेक बुद्धि से शून्य हैं उन भोग परायण अज्ञानियों के लिए) वेद के कर्मकाण्डभाग तीनों गुणों के कार्यरूप संसार विषय को ही बतलाते रहते हैं, अतः हे अर्जुन! तू निष्काम हो जा, सुख-दुःखादि द्वन्द्व से मुक्त, सदा सत्त्व गुण में स्थित, योग क्षेम की चिन्ता छोड़ और अप्रमत्त हो जा॥४५॥

त्रैगुण्येति। **त्रैगुण्यविषया**स्त्रैगुण्यो संसारो विषयः प्रकाशयितव्यो येषां ते **वेदा**स्त्रैगुण्यविषयास्त्वं तु **निस्त्रैगुण्यो भवार्जुन** निष्कामो भवेत्यर्थः। **निर्द्वन्द्वः** सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वंद्वशब्दवाच्यौ ततो निर्गतो निर्द्वन्द्वो भव। त्वं **नित्यसत्त्वस्थः** सदा सत्त्वगुणाश्रितो भव। तथा **निर्योगक्षेमो**ऽनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव। **आत्मवान**प्रमत्तश्च भव। एष तवोपदेशः स्वधर्ममनुतिष्ठतः॥४५॥

सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति? उच्यते शृणु—

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥४६॥

छोटे-छोटे कूपादि जलाशयों से जितना स्नानादि प्रयोजन सिद्ध होता है वह सबका सब सभी ओर से परिपूर्ण जलाशय में अन्तर्भूत हो जाता है। ठीक इसी प्रकार वेदोक्त सभी कर्मों में जो भी प्रयोजन बतलाये गये हैं वे सबके सब परमार्थतत्त्वदर्शी संन्यासी में अन्तर्भूत हो जाते हैं॥४६॥

यावानिति। यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परि-

च्छिन्नोदके **यावान्यावत्परिमाणः** स्नानपानादि**रर्थः** फलं प्रयोजनं स सर्वोऽर्थः **सर्वतः संप्लुतोदके** तावानेव संपद्यते तत्रान्तर्भवतीत्यर्थः। एवं **तावांस्तावत्परिमाण** एव संपद्यते **सर्वेषु वेदेषु** वेदोक्तेषु कर्मसु योऽर्थो यत्कर्मफलम्। सोऽर्थो **ब्राह्मणस्य** संन्यासिनः परमार्थतत्त्वं **विजानतो** योऽर्थो विज्ञानफलं सर्वतःसंप्लुतोदकस्थानीयं, तस्मिंस्तावानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः। 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाःसाधु कुर्वन्ति यस्तद्वेद यत्स वेद' ( छा. ४.१.४ ) इति श्रुतेः। 'सर्वं कर्माखिलम्' ( गी. ४.३३ ) इति च वक्ष्यति। तस्मात्प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम्॥४६॥

तव च—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥४७॥

(जब श्रुति-स्मृति में साक्षात् मोक्ष का साधन ज्ञान ही कहा है तो फिर उसी का अनुष्ठान करना चाहिए, ऐसी शङ्का मन में रखकर अर्जुन से भगवान् श्रीकृष्ण कहते हैं कि) तेरा कर्म में ही अधिकार है, फल में कभी नहीं। वैसे ही कर्मफल का हेतु भी तू मत बन और कर्म के न करने में भी तेरी आसक्ति न हो॥४७॥

कर्मणीति। **कर्मण्येवाधिकारो** न ज्ञाननिष्ठायां **ते** तव। तत्र च कर्म कुर्वतो **मा फले**ष्वधिकारोऽस्तु कर्मफलतृष्णा माभूत्**कदाचन** कस्यांचिदप्यवस्थायामित्यर्थः। यदा कर्मफले तृष्णा ते स्यात्तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं **मा कर्मफलहेतुर्भूः**। यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत्। यदि कर्मफलं नेष्यते

किं कर्मणा दुःखरूपेणेति **मा ते** तव **सङ्गोऽस्त्वकर्मण्यकरणे** प्रीतिर्मा भूत्॥४७॥

यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्युच्यते—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥४८॥**

हे धनंजय! आसक्ति को छोड़कर योग में स्थित हो सिद्धि और असिद्धि में समान रहकर कर्मों को कर। सिद्धि-असिद्धि में समान रहना ही योग कहा गया है॥४८॥

योगस्थ इति। **योगस्थः** सन्**कुरु कर्माणि** केवलमीश्वरार्थं, तत्रापीश्वरो मे तुष्यत्विति **सङ्गं त्यक्त्वा धनंजय।** फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययजाऽसिद्धिस्तयोः **सिद्ध्यसिद्ध्यो**रपि **समस्**तुल्यो **भूत्वा** कुरु कर्माणि। कोऽसौ योगो यत्रस्थः कुर्वित्युक्तम्? इदमेव तत्सिद्ध्यसिद्ध्योः **समत्वं योग उच्यते**॥४८॥

यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मैतस्मात्कर्मणः—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥४९॥**

हे धनंजय! (ज्ञान के साधन रूप) निष्कामकर्मयोग की अपेक्षा सकाम कर्म अत्यन्त तुच्छ माना गया है (जो फलार्थी के द्वारा किया जाता है। अतः पूर्वोक्त सिद्धि-असिद्धि में समान रहना रूप) कर्मयोग अथवा उसके परिणाम स्वरूप सांख्य योग रूप बुद्धि की शरण में जा, क्योंकि फल चाहने वाले सदा दीन बने रहते हैं॥४९॥

दूरेणेति। **दूरेणा**तिविप्रकर्षेण **ह्यवरं** निकृष्टं **कर्म**

फलार्थिना क्रियमाणं **बुद्धियोगा**त्समत्वबुद्धियुक्तात्कर्मणो जन्ममरणादिहेतुत्वा**द्धनंजय**। यत एवं योगविषयायां **बुद्धौ** तत्परिपाकजायां वा सांख्यबुद्धौ **शरण**माश्रयमभयप्राप्तिकारण-**मन्विच्छ** प्रार्थयस्व परमार्थज्ञानशरणो भवेत्यर्थः। यतोऽवरं कर्म कुर्वाणाः **कृपणा** दीनाः **फलहेतवः** फलतृष्णाप्रयुक्ताः सन्तः। "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" (बृ. ३.८.१०) इति श्रुतेः॥४९॥

समत्वबुद्धियुक्तः सन्स्वधर्ममनुतिष्ठन्यत्फलं प्राप्नोति तच्छृणु—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्॥५०॥**

हे अर्जुन! समत्व बुद्धि युक्त पुरुष इसी लोक में (सत्त्वशुद्धिज्ञानप्राप्ति द्वारा) पुण्य-पाप दोनों को त्याग देता है। अतः तू समत्व बुद्धि योग के लिए प्रयत्न कर। स्वधर्मनामक कर्म में संलग्न साधक का पूर्वोक्त रीति से सिद्धि और असिद्धि में ईश्वरार्पण बुद्धि से समान रहना ही कौशल है॥५०॥

बुद्धीति। **बुद्धियुक्तः** समत्वविषयया बुद्ध्या युक्तो बुद्धि-युक्तो **जहाति** परित्यजती**ह**ास्मिँल्लोक **उभे सुकृतदुष्कृते** पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यत**स्तस्मा**त्समत्वबुद्धि-**योगाय युज्यस्व** घटस्व। **योगो** हि **कर्मसु कौशलं** स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धि-रीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः। तद्धि कौशलं यद्बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते। तस्मात्समत्वबुद्धियुक्तो भव त्वम्॥५०॥

यस्मात्—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥५१॥**

बुद्धियुक्त मनीषी पुरुष स्वधर्मरूप कर्म का अनुष्ठान करते हैं, उससे उत्पन्न देहप्रभेदरूप फल को छोड़कर जन्म-रूप बन्धन से मुक्त हुए, सभी संसारधर्म से शून्य, वैष्णव पद को प्राप्त करते हैं॥५१॥

कर्मजमिति। **कर्मजं फलं त्यक्त्वेति व्यवहितेन संबन्धः।** इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं **बुद्धियुक्ताः** समत्वबुद्धियुक्ता **हि** यस्मात्**फलं त्यक्त्वा** परित्यज्य **मनीषिणो** ज्ञानिनो भूत्वा **जन्मबन्धविनिर्मुक्ता** जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः **पदं** परमं विष्णोर्मोक्षाख्यं **गच्छन्त्यनामयं** सर्वोपद्रवरहितमित्यर्थः। अथवा 'बुद्धियोगाद्धनंजय' (गी. २. ४९) इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिर्दर्शिता, साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात्॥५१॥

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्यत इत्युच्यते—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥५२॥**

जब तेरी बुद्धि अविवेकात्मक अहंता ममता रूप कालुष्य को सर्वथा पार कर जायेगी तब आत्म याथात्म्य विवेक परिपाकावस्था में तत्त्वातत्त्व निर्णायकशास्त्रातिरिक्त श्रोतव्य और श्रुत सभी पदार्थों से तुम वैराग्य को प्राप्त कर जाओगे॥५२॥

यदेति। **यदा** यस्मिन्काले **ते** तव **मोहकलिलं** मोहात्मकमविवेकरूपं कालुष्यं येनाऽऽत्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते तत्तव **बुद्धिर्व्यतितरिष्यति** व्यतिक्रमिष्यति शुद्धिभावमापत्स्यत इत्यर्थः। **तदा**

तस्मिन्काले **गन्तासि** प्राप्स्यसि **निर्वेदं** वैराग्यं **श्रोतव्यस्य श्रुतस्य च**। तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः ॥५२॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामीति चेत्तच्छृणु—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥**

जब तेरी बुद्धि जो अब तक विभिन्न श्रुतियों के सुनने से विक्षिप्त हो गयी थी, वह विक्षेप रहित संशय-विपर्यय विकल्प शून्य हो आत्मयाथात्म्य में स्थिर हो जायेगी, तब तुम योग को प्राप्त कर जाओगे ॥५३॥

श्रुतिविप्रतिपन्नेति। **श्रुतिविप्रतिपन्ना**ऽनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैर्विप्रतिपन्ना नानाप्रतिपन्ना श्रुतिविप्रतिपन्ना विक्षिप्ता सती **ते** तव बुद्धिर्**यदा** यस्मिन्काले **स्थास्यति** स्थिरीभूता भविष्यति **निश्चला** विक्षेपचलनवर्जिता सती **समाधौ** समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतत्। **अचला** तत्रापि विकल्पवर्जितेत्येतत्। **बुद्धि**रन्तःकरणं **तदा** तस्मिन्काले **योगमवाप्स्यसि** विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥५३॥

प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—

**अर्जुन उवाच—**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥**

जिस संन्यासी को ज्ञाननिष्ठा प्राप्त हो चुकी है और जो परमात्मा

श्लोक 11 से 25 तक व 30 वें श्लोक में भगवान ने सांख्य बुद्धि बनाने के लिए उपदेश किया है



में सदा समाहित है, हे केशव! ऐसे पुरुष का लक्षण क्या है? स्थितप्रज्ञ पुरुष कैसे बोलता है, कैसे बैठता है और कैसे चलता है?॥५४॥

स्थितप्रज्ञस्येति। स्थिता प्रतिष्ठिताऽहमस्मि परं ब्रह्मेति प्रज्ञा यस्य स **स्थितप्रज्ञस्तस्य का भाषा** किं भाषणं वचनं कथमसौ परैर्भाष्यते **समाधिस्थस्य** समाधौ स्थितस्य **केशव! स्थितधीः** स्थितप्रज्ञः स्वयं वा **किं प्रभाषेत। किमासीत व्रजेत किम्।** आसनं व्रजनं वा तस्य कथमित्यर्थः। स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति॥५४॥

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तो यश्च कर्मयोगेन(ण), तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते। सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि, तान्येव साधनान्युपदिश्यन्ते, यत्नसाध्यत्वात्। यानि यत्नसाध्यानि साधनानि, लक्षणानि च भवन्ति तानि—

**श्रीभगवानुवाच—**

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥५५॥**

भगवान् श्रीकृष्ण ने कहा— हे पार्थ! जब मनोगत सम्पूर्ण कामनाओं को साधक सर्वथा छोड़ बैठता है और वह आत्मा से आत्मा में ही सन्तुष्ट रहता है तब आत्माराम संन्यासी स्थितप्रज्ञ कहा जाता है॥५५॥

प्रजहातीति। **प्रजहाति** प्रकर्षेण जहाति परित्यजति **यदा** यस्मिन्काले **सर्वान्**समस्तान्**कामान्**इच्छाभेदान्हे **पार्थ मनोगतान्**मनसि प्रविष्टान्हृदि प्रविष्टान्। सर्वकामपरित्यागे तुष्टिकारणाभावाच्छरीरधारणनिमित्तशेषे च सत्युन्मत्तप्रमत्तस्येव

**प्रवृत्तिः प्राप्तेत्यत उच्यते—आत्मन्येव** प्रत्यगात्मस्वरूप एवाऽऽत्मना **स्वेनैव** बाह्यलाभनिरपेक्षस्**तुष्टः** परमार्थ-दर्शनामृतरसलाभेनान्यस्मादलंप्रत्ययवान्स्थितप्रज्ञः स्थिता प्रति-ष्ठिताऽऽत्मानात्मविवेकजा प्रज्ञा यस्य स **स्थितप्रज्ञो** विद्वां-स्**तदोच्यते**। त्यक्तपुत्रवित्तलोकैषणः संन्यास्यात्माराम आत्म-क्रीडः स्थितप्रज्ञ इत्यर्थः ॥५५॥

किंच—

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥**

(आध्यात्मिक, आधिदैविक और आधिभौतिक) दुःखों के प्राप्त होने पर जिसका मन उद्विग्न नहीं होता तथा सुखों की प्राप्ति में जिसकी स्पृहा बढ़ती नहीं है, ऐसा राग, भय और क्रोध से सर्वथा छूटा हुआ संन्यासी स्थितप्रज्ञ कहा जाता है ॥५६॥

दुःखेष्विति। **दुःखेष्**वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयम**नुद्विग्नमनाः**। तथा **सुखेषु** प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनुविवर्धन्ते स **विगतस्पृहः**। **वीतरागभयक्रोधो** रागश्च भयं च क्रोधश्च वीता विगता यस्मात्स वीतरागभयक्रोधः **स्थितधीः** स्थितप्रज्ञो **मुनिः** संन्यासी **तदोच्यते** ॥५६॥

किंच—

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥**

जो जिज्ञासु साधक देहादि सभी वस्तुओं में अभिस्नेह (आसक्ति) नहीं रखता और प्रारब्धानुसार शुभवस्तु को प्राप्त कर हर्षित नहीं होता एवं अशुभ को प्राप्त कर द्वेष नहीं करता, उस साधक की प्रज्ञा स्थिर होती है ॥५७॥

यः सर्वत्रेति। **यो** मुनिः **सर्वत्र** देहजीवितादिष्वप्य**नभिस्नेहो**ऽभिस्नेहवर्जितस्**तत्तत्प्राप्य शुभाशुभं** तत्तच्छुभमशुभं वा लब्ध्वा **नाभिनन्दति न द्वेष्टि** शुभं प्राप्य न तुष्यति न हृष्यत्यशुभं च प्राप्य न द्वेष्टीत्यर्थः। **तस्यैवं** हर्षविषादवर्जितस्य विवेकजा **प्रज्ञा प्रतिष्ठिता** भवति॥५७॥

किंच—

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥५८॥**

जैसे कछुआ अपने अङ्गों को समेटता है वैसे ही जब ज्ञाननिष्ठा में प्रवृत्त यति सभी प्रकार से इन्द्रियों के विषयों से इन्द्रियों को समेट लेता है, तब उसकी प्रज्ञा स्थिर होती है॥५८॥

यदा संहरत इति। **यदा संहरते** सम्यगुपसंहरते **चायं** ज्ञाननिष्ठायां प्रवृत्तो यतिः **कूर्मोऽङ्गानीव सर्वशो** यथा कूर्मो भयात्स्वान्यङ्गान्युपसंहरति सर्वत एवं ज्ञाननिष्ठ **इन्द्रियाणीन्द्रियार्थेभ्यः** सर्वविषयेभ्य उपसंहरते। **तस्य प्रज्ञा प्रतिष्ठितेत्**युक्तार्थं वाक्यम्॥५८॥

तत्र विषयाननाहरत आतुरस्यापीन्द्रियाणि निवर्तन्ते कूर्माङ्गानीव संह्रियन्ते, न तु तद्विषयो रागः, स कथं संह्रियत इति। उच्यते—

**विषया विनिवर्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥५९॥**

विषयों का आहरण न करने वाले (आतुर पुरुष की भी इन्द्रियाँ कछुये के अङ्गों की भाँति) विषयों से विमुख तो रहती हैं किन्तु उस विषय का राग नहीं मिटता है। पर इस तत्त्वज्ञानी का तो परमार्थतत्त्व का दर्शन हो जाने के कारण राग भी मिट जाता है॥५९॥

विषया इति। यद्यपि विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाण्यथवा **विषया एव निराहारस्याना**ह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि **विनिवर्तन्ते देहिनो** देहवतो **रसवर्जं** रसो रागो विषयेषु यस्तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः। स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्शनात्। **सोऽपि रसो** रञ्जनरूपः सूक्ष्मो**ऽस्य** यतेः **परं** परमार्थतत्त्वं ब्रह्म **दृष्ट्वो**पलभ्याहमेव तदिति वर्तमानस्य **निवर्तते** निर्बीजं विषयविज्ञानं संपद्यत इत्यर्थः। नासति सम्यग्दर्शने रसस्योच्छेदः। तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥५९॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षताऽऽदाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात्तदनवस्थापने दोषमाह—

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥**

हे कौन्तेय! यत्नशील विवेकी पुरुष के भी विवेक विज्ञान युक्त मन को प्रमथनशील (विनाशकारी) इन्द्रियाँ हठात् विषयों की ओर ले जाती हैं ॥६०॥

यतत इति। **यततः** प्रयत्नं कुर्वतो**ऽपि हि** यस्मा**त्कौन्तेय पुरुषस्य विपश्चितो** मेधाविनोऽपीति व्यवहितेन संबन्धः। **इन्द्रियाणि प्रमाथीनि** प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्त्याकुलीकुर्वन्ति। आकुलीकृत्य च **हरन्ति प्रसभं** प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं **मनः** ॥६०॥

यतस्तस्मात् —

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥**

उन इन्द्रियों को संयमित कर समाहित हो मेरे परायण होकर साधक बैठे, क्योंकि जिसकी इन्द्रियाँ अपने वश में होती हैं, उसी की प्रज्ञा प्रतिष्ठित होती है॥६१॥

तानीति। **तानि सर्वाणि संयम्य** संयमनं वशीकरणं कृत्वा **युक्तः** समाहितः **सन्नासीत। मत्परो**ऽहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्योऽहं तस्मादित्यासीतेत्यर्थः। एवमासीनस्य **यतेर्वशे हि यस्येन्द्रियाणि** वर्तन्तेऽभ्यासबलात्तस्य **प्रज्ञा प्रतिष्ठिता**॥६१॥

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते॥६२॥**

जब कोई मनुष्य रमणीय एवं सुख के साधनों की दृष्टि से विषयों का चिन्तन करता है तब उन विषयों में उसकी आसक्ति हो जाती है, आसक्ति से काम (तृष्णा) उत्पन्न होता है और काम में किसी प्रतिबन्ध के आते ही क्रोध उत्पन्न हो जाता है॥६२॥

ध्यायत इति। **ध्यायत**श्चिन्तयतो **विषया**ञ्शब्दादिविषयविशेषानालोचयतः **पुंसः** पुरुषस्य **सङ्ग** आसक्तिः प्रीतिस्तेषु विषयेषू**पजायते। सङ्गा**त्प्रीतेः **संजायते** समुत्पद्यते **काम**स्तृष्णा। **कामा**त्कुतश्चित्प्रतिहतात्**क्रोधोऽभिजायते**॥६२॥

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥६३॥**

क्रोध से (कार्याकार्यविषयक अविवेकरूप) सम्मोह उत्पन्न होता है, सम्मोह से स्मृति नष्ट हो जाती है, स्मृति के नाश से बुद्धि का नाश होता है और बुद्धि के नाश से पुरुष सर्वथा नष्ट हो जाता है॥६३॥

**क्रोधाद्भवति संमोहो**ऽविवेकः कार्याकार्यविषयः। क्रुद्धो हि संमूढः सन्गुरुमप्याक्रोशति। **संमोहात्स्मृतिविभ्रमः** शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्याद्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः। ततः **स्मृतिभ्रंशाद्बुद्धेर्नाशः**। कार्याकार्यविषयविवेकायोग्यताऽन्तःकरणस्य बुद्धेर्नाश उच्यते। **बुद्धिनाशात्प्रणश्यति**। तावदेव हि पुरुषो यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यं तदयोग्यत्वे नष्ट एव पुरुषो भवत्यतस्तस्यान्तःकरणस्य बुद्धेर्नाशात्प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः॥६३॥

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानमथेदानीं मोक्षकारणमिदमुच्यते—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥६४॥**

स्वाधीन अन्तःकरण वाला पुरुष राग-द्वेष से रहित अपने वश में की हुई इन्द्रियों के द्वारा (जब देह स्थिति के कारण अवर्जनीय) विषयों का उपभोग करता है तब वह प्रसन्नता (स्वास्थ्य) को प्राप्त करता है॥६४॥

रागद्वेषेति। **रागद्वेषवियुक्तैः** रागश्च द्वेषश्च रागद्वेषौ। तत्पुरःसरा हीन्द्रियाणां प्रवृत्तिः स्वाभाविकी। तत्र यो मुमुक्षुर्भवति स ताभ्यां वियुक्तैः श्रोत्रादिभि**रिन्द्रियैर्विषयान**वर्जनीयांश्च**रन्नु**पलभमान **आत्मवश्यै**रात्मनो वश्यानिवशीभूतानि तैरात्मवश्यै**र्विधेयात्मे**च्छातो विधेय आत्माऽन्तःकरणं यस्य सोऽयं **प्रसादमधिगच्छति**। प्रसादः प्रसन्नता स्वास्थ्यम्॥६४॥

प्रसादे सति किं स्यादित्युच्यते—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते॥६५॥**

(अन्तःकरण की) स्वच्छता होने पर इस पुरुष के सम्पूर्ण दुःखों का नाश हो जाता है; साथ ही, शुद्ध अन्तःकरण वाले पुरुष की बुद्धि शीघ्र ही सभी ओर से समाहित हो जाती है॥६५॥

प्रसाद इति। **प्रसादे सर्वदुःखाना**माध्यात्मिकादीनां **हानि**र्विनाशो**ऽस्य** यते**रुपजायते**। किंच **प्रसन्नचेतसः** स्वस्थान्तःकरणस्य **हि** यस्मा**दाशु** शीघ्रं **बुद्धिः पर्यवतिष्ठत** आकाशमिव परि समन्तादवतिष्ठत आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः। एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः॥६५॥

सेयं प्रसन्नता स्तूयते—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥६६॥**

असमाहित अन्तःकरण वाले पुरुष की (संशयादिशून्य स्वरूपसाक्षात्कार-विषयक) बुद्धि नहीं होती है, उस असमाहित पुरुष की निदिध्यासनरूपा भावना भी नहीं होती है और भावना रहित पुरुष को शान्ति नहीं मिलती। फिर भला अशान्त पुरुष को सुख कहाँ से मिल सकेगा॥६६॥

नास्तीति। **नास्ति** न विद्यते न भवतीत्यर्थः। **बुद्धिरा**त्मस्वरूपविषया**ऽयुक्तस्या**समाहितान्तःकरणस्य। **न चा**स्त्य**युक्तस्य भावना**ऽऽत्मज्ञानाभिनिवेशः। तथा **न चा**स्त्य**भावयत** आत्मज्ञानाभिनिवेशमकुर्वतः **शान्ति**रुपशमः। **अशान्तस्य कुतः सुखम्**। इन्द्रियाणां हि विषयसेवातृष्णातो

निवृत्तिर्या तत्सुखं, न विषयविषया तृष्णा, दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यत इत्यर्थः॥६६॥

अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥६७॥**

(इन्द्रियाँ प्रायशः रागद्वेषादिपूर्वक अपने-अपने विषयों में विचरती हैं, उनमें से) जिस इन्द्रिय के पीछे मन चलता रहता है उस स्थिति में वह मन उस साधक की बुद्धि को वैसे ही हर ले जाता है जैसे जल में चलने वाली नौका को हवा विपरीत दिशा में ले जाकर पटक देती है॥६७॥

इन्द्रियाणामिति। **इन्द्रियाणां हि** यस्मा**च्चरतां** स्व-स्वविषयेषु प्रवर्तमानानां **यन्मनोऽनुविधीयते**ऽनुप्रवर्तते तदिन्द्रियविषयविकल्पनेन प्रवृत्तं मनो**ऽस्य** यते**र्हरति प्रज्ञा**मात्मानात्मविवेकजां नाशयति। कथं, **वायुर्नावमिवाम्भ**स्युदके जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति॥६७॥

'यततो ह्यपि' (गी. २.६०) इत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तं चार्थमुपपाद्योपसंहरति —

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥६८॥**

अतः हे महाबाहो! जिसकी इन्द्रियाँ सभी प्रकार से इन्द्रियों के विषयों से निगृहीत होती हैं उसी की प्रज्ञा स्थिर होती है॥६८॥

तस्मादिति। इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्— **तस्माद्यस्य** यतेर्हे **महाबाहो निगृहीतानि सर्वशः**

सर्वप्रकारैर्मानसादिभेदै**रिन्द्रियाणीन्द्रियार्थेभ्यः** शब्दादिभ्य-**स्तस्य प्रज्ञा प्रतिष्ठिता**॥६८॥

योऽयं लौकिको वैदिकश्च व्यवहारः स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्याविद्याकार्यत्वादविद्यानिवृत्तौ निवर्तते। अविद्यायाश्च विद्याविरोधान्निवृत्तिरित्येतमर्थं स्फुटीकुर्वन्नाह—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥६९॥**

जो सम्पूर्ण भूतों के लिए परमार्थतत्त्व रात्रि के तुल्य है उसी में संयमी पुरुष जागता है और जिस अविद्यारूपी निशा में सर्व साधारण प्राणी जागते हैं वह तत्त्वदर्शी स्थितप्रज्ञ के लिए रात्रि के तुल्य है॥६९॥

या निशेति। **या निशा** रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात्सर्वेषां भूतानां **सर्वभूतानाम्**। किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तंचराणामहरेव सदन्येषां निशा भवति तद्वन्नक्तंचरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वमगोचरत्वादतद्बुद्धीनाम्। **तस्यां** परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो **जागर्ति संयमी** संयमवाञ्जितेन्द्रियो योगीत्यर्थः।

**यस्यां** ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव **भूतानि जाग्रतीत्युच्यते** यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः **सा निशा**ऽविद्यारूपत्वात्परमार्थतत्त्वं **पश्यतो मुनेः**। अतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायाम्। विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या। प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते। नाप्रमाण-

बुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः। प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्मेति हि कर्मणि कर्त्ता प्रवर्तते नाविद्यामात्रमिदं सर्वं निशेवेति।

यस्य पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्याऽऽत्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ। तथा च दर्शयिष्यति—'तद्बुद्धयस्तदात्मानः' ( गी. ५.१७ ) इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारम्। तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेत्, न। स्वात्मविषयत्वादात्मज्ञानस्य। न ह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षताऽऽत्मत्वादेव तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य। न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति। प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणम्। निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे। लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात्प्रमाणस्य। तस्मान्नाऽऽत्मविदः कर्मण्यधिकार इति सिद्धम्॥६९॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्न त्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह—

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत्।**
**तद्वत्कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी॥७०॥**

जैसे सभी ओर से परिपूर्ण-जल और अचल प्रतिष्ठा वाले समुद्र में सभी ओर से जल प्रवेश करते हैं फिर भी वह अक्षुब्ध, स्वस्थ ही रहता है, वैसे ही स्वात्माराम संन्यासी में सभी ओर से भोग प्रवेश करते हैं फिर भी वह अक्षुब्ध और स्वस्थ रहता है। ऐसा संन्यासी

आत्मज्ञानी ही शान्ति को प्राप्त करता है, भोगों के पीछे भागने वाला ऐसी शान्ति प्राप्त नहीं करता ॥ ७० ॥

आपूर्येति। **आपूर्यमाणमद्भिरचलप्रतिष्ठमचलतया** प्रतिष्ठाऽवस्थितिर्यस्य **तमचलप्रतिष्ठं समुद्रमापः** सर्वतो गताः **प्रविशन्ति** स्वात्मस्थमविक्रियमेव सन्तं **यद्वत्तद्वत्कामा** विषयसंनिधावपि सर्वत इच्छाविशेषा **यं** पुरुषं समुद्रमिवाऽऽपोऽविकुर्वन्तः **प्रविशन्ति सर्वे** आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, **स शान्तिं** मोक्षमाप्नोति **नेतरः कामकामी** काम्यन्त इति कामा विषयास्तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः ॥ ७० ॥

यस्मादेवं तस्मात्—

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

जो पुरुष सम्पूर्ण भोगों को छोड़कर स्पृहा, ममता और अहंकार से शून्य हो व्यवहार करता है वह स्थितप्रज्ञ पुरुष मोक्ष को प्राप्त करता है ॥ ७१ ॥

विहायेति। **विहाय** परित्यज्य **कामान्यः** संन्यासी **पुमान्सर्वानशेषतः** कार्त्स्न्येन **चरति** जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः। **निःस्पृहः** शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निःस्पृहः सन्निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशवर्जितः, **निरहंकारो** विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इत्यर्थः। **स** एवंभूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्या**मधिगच्छति** प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

सैषा ज्ञाननिष्ठा स्तूयते—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति॥७२॥**

आदितः श्लो. ११९

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः॥२॥***

हे पृथापुत्र अर्जुन! यथोक्त स्थिति ब्रह्म को प्राप्त किये हुए पुरुष की है, इस स्थिति को प्राप्त कर वह मोहित नहीं होता है। जीवन के अन्तकाल में भी इस स्थिति को प्राप्त कर लेने वाला ब्रह्मनिर्वाण को प्राप्त करता ही है।

*इस प्रकार श्रीमद्भगवद्गीता की श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी द्वारा सांख्ययोग नामक द्वितीयाध्याय की मिताक्षरा व्याख्या सम्पूर्ण हुई॥२॥*

एषा ब्राह्मीति। **एषा** यथोक्ता **ब्राह्मी** ब्रह्मणि भवेयं **स्थितिः** सर्वं कर्म संन्यस्य ब्रह्मरूपेणैवावस्थानमित्येतत्। हे **पार्थ नैनां** स्थितिं **प्राप्य** लब्ध्वा न **विमुह्यति** न मोहं प्राप्नोति। **स्थित्वाऽस्यां** स्थितौ ब्राह्म्यां यथोक्ताया**मन्तकालेऽ**प्यन्ते वयस्यपि **ब्रह्मनिर्वाणं** ब्रह्मनिर्वृतिं मोक्ष**मृच्छति** गच्छति, किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति॥७२॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपाद-शिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः॥२॥*

**द्वितीयाह्निकम्॥२॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम द्वितीयोऽध्यायः॥२॥

ॐ

# श्रीमद्भगवद्गीता

## अथ तृतीयोऽध्यायः

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिरिति च। तत्र 'प्रजहाति यदा कामान्' (गी. २.५५) इत्यारभ्याऽऽध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्ता— 'एषा ब्राह्मी स्थितिः' (गी. २.७२) इति। अर्जुनाय च 'कर्मण्येवाधिकारस्ते' (गी. २.४७) 'मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तवान्योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान्।

तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच। कथं भक्ताय श्रेयोऽर्थिने यत्साक्षाच्छ्रेयःसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य। तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिः। प्रश्नापाकरणवाक्यं च भगवतोक्तं यथोक्तविभागविषये शास्त्रे।

केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति, यथा चाऽऽत्मना संबन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति। कथं? तत्र संबन्धग्रन्थे तावत्सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं, पुनर्विशेषितं च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञाना-

कर्मयोग में भक्तों की प्रधानता है। अथवा भक्ति ही कर्मयोग है। भाव पर दृष्टि हो तो भक्तियोग कर्म पर दृष्टि हो तो कर्मयोग।



न्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमिति, इह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत्।

तत्रैतत्स्याद्गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव। कथं, सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तराणाम्। अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानाच्छ्रौतकर्मरहितादगृहस्थानां मोक्षः प्रतिषिध्यत इति।

तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलान्नमोक्षेत्युच्यत इति। एतदपि विरुद्धम्। कथं, गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताज्ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुम्।

किंच यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापीष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः। अथ श्रौतैः स्मार्तैश्च गृहस्थस्येव समुच्चयो मोक्षायोर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मोक्ष इति। तत्रैवं सति गृहस्थस्याऽऽयासबाहुल्याच्छ्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात्।

अथ गृहस्थस्यैवाऽऽयासबाहुल्यकारणान्मोक्षः स्यान्नाऽऽश्रमान्तराणं, श्रौतनित्यकर्मरहितत्वादिति। तदप्यसत्। सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृतियोः।

“इतः कोन्वास्ति विमूढ़ात्मा यो स्वानुस्वार्थे प्रमाद्यति”

सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः। न। मुमुक्षोः सर्वकर्मसंन्यासविधानात्। ''व्युत्थायाथ भिक्षाचर्यं चरन्ति'' ( बृ. ३.५.१ ) ''तस्मात्संन्यासमेषां तपसामतिरिक्तमाहुः'' ( म. ना. २४.१ ) ''न्यास एवात्यरेचयत्'' ( म. ना. २१.२ ) इति ''न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः'' ( म.ना. १०.५ ) इति च। ''ब्रह्मचर्यादेव प्रव्रजेत्'' ( जा. उ. ४ ) इत्याद्याः।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज॥
( महा. शान्ति. ३२९-४० )

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥ ( ना. पु. ३.१५ )

इति बृहस्पतिरपि कचं प्रति।

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥
( महा. शान्ति. २४१.७) इति शुकानुशासनम्।

इहापि 'सर्वकर्माणि मनसा संन्यस्य' ( गी. ५.१३ ) इत्यादि। मोक्षस्य चाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम्।

नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत्, न, असंन्यासिविषयत्वात्प्रत्यवायप्राप्तेः। न ह्यग्निकार्याद्यकरणात्संन्यासिनः प्रत्यवायः कल्पयितुं शक्यो, यथा ब्रह्मचारिणामसंन्यासिनामपि कर्मिणाम्। न तावन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या, 'कथमसतः सज्जायेत' ( छा. ६.२.२ ) इत्यसतः सज्जन्मासंभवश्रुतेः।

यदि विहिताकरणादसंभाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्त-

दाऽनर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्। विहितस्य करणाकरणयोर्दुःखमात्रफलत्वात्। तथा च कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं स्यात्। न चैतदिष्टम्। तस्मान्न संन्यासिनां कर्माण्यतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः। 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इत्यर्जुनस्य प्रश्नानुपपत्तेश्च।

यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चयेन त्वयानुष्ठेयमित्युक्तं स्यात्ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इति। अर्जुनाय चेद्बुद्धिकर्मणी त्वयाऽनुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धिः साऽप्युक्तैवेति 'तत्किं कर्मणि घोरे मां नियोजयसि केशव' ( गी. ३.१ ) इत्युपालम्भो वा प्रश्नो वा न कथंचनोपपद्यते। न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं, येन 'ज्यायसी चेत्'इति प्रश्नः स्यात्।

यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात्ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादिः। अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते। न चाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यम्। अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनाज्ज्ञानकर्मणोः समुच्चयानुपपत्तिः। तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च। ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनाऽनुपपन्नोभयोः समुच्चयसंभवे। 'कुरु कर्मैव तस्मात्त्वम्' ( गी. ४.१५ ) इति च ज्ञाननिष्ठासंभवमर्जुनस्यावधारणेन दर्शयिष्यति।

अर्जुन उवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव॥१॥**

अर्जुन ने कहा कि हे जनार्दन! यदि कर्म से बुद्धि-योग श्रेष्ठ आपको मान्य है, तो हे केशव! आप मुझे घोर हिंसात्मक कर्म में क्यों लगा रहे हैं॥१॥

ज्यायसी चेदिति। **ज्यायसी** श्रेयसी **चे**द्यदि **कर्मणः** सकाशा**त्ते** तव **मता**ऽभिप्रेता **बुद्धि**र्ज्ञानं हे **जनार्दन** यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यान्न हि तदेव तस्मात्फलतोऽतिरिक्तं स्यात्। तथा कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति, तत्किं नु कारणमिति भगवत उपालम्भमिव कुर्वं**स्तत्किं** कस्मा**त्कर्मणि घोरे** क्रूरे हिंसालक्षणे **मां नि-योजयसि केशवे**ति च यदाह तच्च नोपपद्यते। अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तोऽर्जुनेन चावधारितश्चेत्त-त्किं कर्मणि घोरे मां नियोजयसीत्यादि कथं युक्तं वचनम्॥१॥

किंच—

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्॥२॥**

मिले हुए वाक्य के जैसे मुझे मोह में डालते हुए की भाँति जान पड़ते हैं, इसलिए एक साधन निश्चय कर आप कहें जिस साधन से मैं कल्याण को प्राप्त कर सकूँ॥२॥

व्यामिश्रेणेति। **व्यामिश्रेणेव** मिलितमिव यद्यपि विवि-

क्ताभिधायी भगवांस्तथाऽपि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति। तेन मम **बुद्धिं मोहयसीव**। मम बुद्धिव्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीव **मे** ममेति। त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि मन्यसे तत्रैवं सति **तत्तयोरेकं** बुद्धिं कर्म वेदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति **निश्चित्य वद** ब्रूहि। **येन** ज्ञानेन कर्मणा वाऽन्यतरेण **श्रेयोऽहमाप्नुयां** प्राप्नुयाम्। यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्तत्कथं तयोरेकं वदेत्येकविषयैवार्जुनस्य शुश्रूषा स्यात्। न हि भगवतोक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति, येनोभयप्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयेत्॥२॥

प्रश्नानुरूपमेव प्रतिवचनम्—

**श्रीभगवानुवाच—**

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥३॥**

भगवान् श्रीकृष्ण ने कहा कि हे निष्पाप अर्जुन! मैंने इस कर्मप्रधान मनुष्यलोक में पहले दो प्रकार की निष्ठा कही है, उनमें से सांख्यों की निष्ठा ज्ञानयोग के द्वारा और योगियों की निष्ठा कर्मयोग के द्वारा बतलायी है॥३॥

लोकेऽस्मिन्निति। **लोकेऽस्मिञ्**शास्त्रानुष्ठानाधिकृतानां त्रैवर्णिकानां **द्विविधा** द्विप्रकारा **निष्ठा** स्थितिरनुष्ठेयतात्पर्यं **पुरा** पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता **प्रोक्ता मया** सर्वज्ञेनेश्वरेण **हेऽनघ**! अपाप!

का सा द्विविधा निष्ठेत्याह—ज्ञानेति। तत्र **ज्ञानयोगेन**

ज्ञानमेव योगस्तेन **सांख्यानामा**त्मानात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव योगः कर्मयोगस्तेन **कर्मयोगेन योगिनां** कर्मिणां निष्ठा प्रोक्तेत्यर्थः। यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं, कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्। यदि पुनरर्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यत्यन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत, तदा रागद्वेषवानप्रमाणभूतो भगवान्कल्पितः स्यात्। तच्चायुक्तम्। तस्मात्कयाऽपि युक्त्या न समुच्चयो ज्ञानकर्मणोः। यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेस्तच्च स्थितमनिराकरणात्। तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनाच्च भगवत एवमेवानुमतमिति गम्यते॥३॥

मां च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमनसमर्जुनं कर्म नाऽऽरभ इत्येवं मन्वानमालक्ष्याऽऽह भगवान्— न कर्मणामनारम्भादिति। अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातन्त्र्येण, ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थं प्रदर्शयिष्यन्नाह भगवान्—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति॥४॥

शास्त्र विहित यागादिक्रिया का अनुष्ठान किये बिना कोई भी साधक कर्मशून्यतारूप नैष्कर्म्य को अर्थात् निष्क्रिय आत्मस्वरूपेण अवस्थानरूप निष्ठा को प्राप्त नहीं करता। तथा केवल कर्म के परित्याग मात्र से ज्ञानयोग के द्वारा प्राप्त होने वाली नैष्कर्म्यसिद्धिरूप स्थिति को कोई भी साधक प्राप्त नहीं करता॥४॥

**न कर्मणामनारम्भाद**प्रारम्भात्कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वाऽनुष्ठितानामुपात्तदुरित-क्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्ति-द्वारेण ज्ञाननिष्ठाहेतूनाम्—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि॥( महा. शान्ति. २०४.८ )

इत्यादिस्मरणादनारम्भादननुष्ठाना**न्नैष्कर्म्यं** निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थान-मिति यावत्, **पुरुषो नाश्नुते** न प्राप्नोतीत्यर्थः।

कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्य-यात्तेषामारम्भान्नैष्कर्म्यमश्नुत इति गम्यते। कस्मात्पुनः कारणा-त्कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति। उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात्। न ह्युपायमन्तरेणोपेयप्राप्तिरस्ति। कर्म-योगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात्। श्रुतौ तावत्प्रकृतस्याऽऽत्मलोकस्य वेद्यस्य वेदनो-पायत्वेन "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" ( बृ. ४.४.२२ ) इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रति-पादितम्। इहापि च—

"संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः"। (गी. ५.६)

"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये"। (गी. ५.११)

"यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" (गी. १८.५)

इत्यादि प्रतिपादयिष्यति। ननु च—'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' (मै. ६.८) इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति, लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरमतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह-**न च संन्यसनादेवे**ति। नापि संन्यसनादेव केवलात्कर्मपरित्यागमात्रादेव ज्ञानरहिता**त्सिद्धिं** नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां **समधिगच्छति** न प्राप्नोति॥४॥

कस्मात्पुनः कारणात्कर्मसंन्यासमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥५॥**

कोई भी पुरुष बिना कर्म किये कभी एक क्षण भी नहीं रह सकता। प्रकृति से उत्पन्न सत्त्व, रज और तमोगुण से परवश हुए सभी अज्ञानी जीवों द्वारा कर्म कराया जाता है॥५॥

न हीति। **न हि** यस्मात्क्षणमपि कालं **जातु** कदाचित्क**श्चित्तिष्ठत्यकर्मकृ**त्सन्। कस्मात्**कार्यते हि** यस्मा**दवश** एव **कर्म सर्वः** प्राणी **प्रकृतिजैः** प्रकृतितो जातैः सत्त्वरजस्तमोभि**र्गुणैः**। अज्ञ इति वाक्यशेषो यतो वक्ष्यति—'गुणैर्यो न विचाल्यते' (गी. १४.२३) इति। सांख्यानां पृथक्करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनाम्।

ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात्कर्मयोगो नोपपद्यते। तथा च व्याख्यातं वेदाविनाशिनमित्यत्र॥५॥

यस्त्वनात्मज्ञश्चोदितं कर्म नाऽऽरभत इति तदसदेवेत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥६॥**

जो हस्तपादादि कर्मेन्द्रियों को रोककर मन से इन्द्रियों के विषयों का स्मरण करता रहता है वह मूढ़बुद्धि है और वह मिथ्याचारी कहा जाता है॥६॥

कर्मेन्द्रियाणीति। **कर्मेन्द्रियाणि** हस्तादीनि **संयम्य** संहृत्य **य आस्ते** तिष्ठति **मनसा स्मरंश्चिन्तयन्निन्द्रियार्थान्**विषयान्**विमूढात्मा** विमूढान्तःकरणो **मिथ्याचारो** मृषाचारः पापाचारः **स उच्यते**॥६॥

**यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥७॥**

इसके विपरीत जो कर्म में अधिकृत अज्ञानी पुरुष ज्ञानेन्द्रियों को मन से नियमन कर वागादि कर्मेन्द्रियों द्वारा अनासक्त हो कर्मयोग का अनुष्ठान करता है वह पूर्वोक्त मिथ्याचारी से कहीं श्रेष्ठ है॥७॥

यस्त्विति। यस्तु पुनः कर्मण्यधिकृतोऽज्ञो **बुद्धीन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन कर्मेन्द्रियैर्**वाक्पाण्यादिभिः। किमारभत इत्याह—**कर्मयोगमसक्तः** सन्**स विशिष्यत** इतरस्मान्मिथ्याचारात्॥७॥

यत एवमतः—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः॥८॥**

कर्म न करने की अपेक्षा कर्म करना श्रेष्ठ है। अतः हे अर्जुन!

तू नियत कर्म कर क्योंकि कर्म न करने से तो तेरी शरीर-यात्रा भी नहीं चल सकेगी॥८॥

नियतमिति। **नियतं** नित्यं यो यस्मिन्कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं **कर्म तत्कुरु त्वं** हेऽर्जुन। यतः **कर्म ज्यायोऽ**धिकतरं फलतो **हि** यस्मा**दकर्मणोऽ**करणादनारम्भात्। कथं **शरीरयात्रा** शरीरस्थिति**रपि च ते** तव **न प्रसिद्ध्येत्**प्रसिद्धिं न गच्छे**दकर्मणो**ऽकरणात्। अतो दृष्टः कर्माकर्मणोर्विशेषो लोके॥८॥

यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत्। **कथम्**—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥९॥**

(यदि तू समझते हो कि बन्धन कारक होने से कर्म नहीं करना चाहिए तो ऐसा समझना तुम्हारा ठीक नहीं क्योंकि) यज्ञार्थ कर्म से भिन्न कर्म लोक में बन्धन कारक माना गया है। अतः हे अर्जुन! तू आसक्ति का परित्याग कर यज्ञार्थ कर्म का भली प्रकार से अनुष्ठान कर॥९॥

यज्ञार्थादिति। "यज्ञो वै विष्णुः" (तै. सं. १.७.४) इति श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म, तस्मात्**कर्मणो**ऽन्यत्रान्येन कर्मणा **लोकोऽयम**धिकृतः कर्मकृत्**कर्मबन्धनः** कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोको न तु **यज्ञार्थादतस्तदर्थं कर्म कौन्तेय मुक्तसङ्गः** कर्मफलसङ्गवर्जितः सन्**समाचर** निर्वर्तय॥९॥

**इतश्चाधिकृतेन कर्म कर्तव्यम्**—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥१०॥**

(नैमित्तिक कर्म के सहित नित्य कर्म का अनुष्ठान अधिकारी को इसलिए भी करना चाहिए क्योंकि) सृष्टि के आरम्भ में प्रजापति ने यज्ञ के सहित प्रजा की सृष्टिकर कहा था कि इस यज्ञ द्वारा तुम लोग वृद्धि को प्राप्त करो और यह यज्ञ तुम्हें अभीष्ट फल देने वाला होगा॥१०॥

**सहेति। सहयज्ञा यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा सर्गादावुवाचोक्तवान्प्रजापतिः प्रजानां स्रष्टा, अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वम्। एष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुगिष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीतीष्टकामधुक् ॥१०॥**

**कथम्—**

**देवान्भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥११॥**

इस यज्ञ द्वारा तुम लोग देवताओं को प्रसन्न करो और वे देवता तुम लोगों को यथेष्ट फल देंगे। इस प्रकार एक-दूसरे की अभिवृद्धि करते हुए तुम सब स्वर्ग तथा परमश्रेय मोक्ष को प्राप्त कर लोगे॥११॥

**देवानिति। देवानिन्द्रादीन्भावयत वर्धयतानेन यज्ञेन ते देवा भावयन्त्वाप्याययन्तु वृष्ट्यादिना वो युष्मानेवं परस्परमन्योन्यं भावयन्तः श्रेयः परं मोक्षं ज्ञानप्राप्तिक्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयोऽवाप्स्यथ॥११॥**

**किंच—**

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥१२॥**

यज्ञानुष्ठान द्वारा संतुष्ट कराये गये देवता तुम लोगों को (स्त्री, पशु, पुत्रादि) अभीष्ट अर्थ को देंगे। (उन देवताओं के द्वारा प्राप्त भोगों को उन्हें पुनः देकर देवऋण का अपाकरण करना चाहिए। यदि ऐसा नहीं

करता हो तो) जो व्यक्ति केवल अपने शरीर, इन्द्रियों का ही पोषण कर रहा हो तो वह देवादि के धन का अपहरण करने वाला चोर ही माना जायेगा॥१२॥

इष्टान्भोगानिति। **इष्टानभिप्रेतान्भोगान्हि वो युष्मभ्यं देवा दास्यन्ते** वितरिष्यन्ति स्त्रीपशुपुत्रादीन्यज्ञभाविता यज्ञैर्वर्धितास्तोषिता इत्यर्थः। **तैर्देवैर्दत्तान्भोगानप्रदा**यादत्त्वाऽऽनृण्यमकृत्वेत्यर्थः, **एभ्यो** देवेभ्यो **यो भुङ्क्ते** स्वदेहेन्द्रियाण्येव तर्पयति **स्तेन एव** तस्कर एव **स** देवादिस्वापहारी॥१२॥

ये पुनः—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥१३॥**

(इसके विपरीत, जो देवयज्ञादि का सम्पादन कर) उससे बचे हुए अमृततुल्य भोजन करते हैं ऐसे यज्ञशिष्टाशी पुरुष सन्त हैं (वे चुल्यादि पञ्चसूना के कारण अथवा प्रमादकृत हिंसादि जनित) सभी पापों से मुक्त हो जाते हैं किन्तु जो आत्मम्भरी पापी हैं वे अपने लिए ही पकाते हैं। ऐसे पापात्मा पाप को ही खाते हैं॥१३॥

यज्ञेति। देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते **यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः** सर्वपापैश्चुल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः। ये त्वात्मंभरयो **भुञ्जते ते त्वघं** पापं स्वयमपि **पापा ये पचन्ति** पाकं निर्वर्तयन्त्या**त्मकारणा**दात्महेतोः॥१३॥

इतश्चाधिकृतेन कर्म कर्तव्यम्। जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति। उच्यते—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥१४॥**

(स्त्री-पुरुष के द्वारा खाये गये अन्न जब शुक्र-शोणित के रूप में परिणत होते हैं तो उससे) अन्य प्राणी उत्पन्न होते हैं, अन्न वर्षा होने पर उत्पन्न होता है और वर्षा यज्ञानुष्ठान से होती है। (यज्ञ एक अपूर्व वस्तु है जिसकी उत्पत्ति ऋत्विग्-यजमान द्रव्य और देवता के व्यापार से सम्पन्न कर्म द्वारा होती है।) उस कर्म से अपूर्व यज्ञ का जन्म होता है। इसलिए यज्ञ को कर्मसमुद्भव कहा गया है॥१४॥

अन्नाद्भवन्तीति। **अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि, पर्जन्याद्वृष्टेरन्नस्य संभवोऽन्नसंभवः, यज्ञाद्भवति पर्जन्यः—**

अग्नौप्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥( मनु. ३.७६ )इति स्मृतेः।

**यज्ञोऽपूर्वं स च यज्ञः कर्मसमुद्भव ऋत्विग्यजमानयोश्च व्यापारः कर्म ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः॥१४॥**

तच्च—

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥१५॥**

कर्म को वेद से उत्पन्न हुआ समझो और वेद को अक्षर ब्रह्म से उत्पन्न जानो। अक्षर ब्रह्म सर्वव्यापक है। अतः यज्ञ में वह परमात्मा सदा विद्यमान रहता है॥१५॥

कर्मेति। **कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः कारणं यस्य तत्कर्म ब्रह्मोद्भवं विद्धि जानीहि, ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवम्, अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरस-**

मुद्भवं **ब्रह्म** वेद इत्यर्थः। यस्मात्साक्षात्परमात्माख्यादक्षरात्पुरुषनिःश्वासवत्समुद्भूतं **ब्रह्म तस्मात्**सर्वार्थप्रकाशकत्वा**त्सर्वगतम्**। सर्वगतमपि सन्नि**त्यं** सदा यज्ञविधिप्रधानत्वा**द्यज्ञे प्रतिष्ठितम्**॥१५॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥१६॥**

इस प्रकार ईश्वर द्वारा वेद और यज्ञ पूर्वक जगच्चक्र चलाया गया है, उसका अनुष्ठान इस लोक में यदि कर्माधिकारी पुरुष नहीं करता है तो वह अघायु है अर्थात् उसका सम्पूर्ण जीवन पापमय है। वह इन्द्रियों द्वारा विषयों में सदा रमण करने के कारण इन्द्रियाराम माना जाता है। हे पार्थ! ऐसा पुरुष व्यर्थ ही जीता है॥१६॥

एवमिति। **एवमि**त्थमीश्वरेण वेदयज्ञपूर्वकं जगच्च**क्रं प्रवर्तितं नानुवर्तयतीह** लोके **यः** कर्मण्यधिकृतः सन्न**घायु**रघं पापमायुर्जीवनं यस्य सो**ऽघायुः** पापजीवन इति यावत्, **इन्द्रियाराम** इन्द्रियैराराम आरमणमाक्रीडा विषयेषु यस्य स इन्द्रियारामो **मोघं** वृथा हे **पार्थ स जीवति**। तस्मादज्ञेनाधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः। प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेन कर्तव्यमेवेत्येतत्। 'न कर्मणामनारम्भात्' (गी. ३.४) इत्यत आरभ्य 'शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः' (गी. ३.८) इत्येवमन्तेन प्रतिपाद्य 'यज्ञार्थात्कर्मणोऽन्यत्र' (गी. ३.९) इत्यादिना 'मोघं पार्थ स जीवति' (गी. ३.१६) इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतम्॥१६॥

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीय-

माहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामनात्मविदा ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थम् 'एतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति, न तेषामात्मज्ञाननिष्ठा-व्यतिरेकेणान्यत्कार्यमस्ति' ( बृ. ३.५.१ ) इत्येवं श्रुत्यर्थ-मिह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन्नाह भगवान्—

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते॥१७॥**

परन्तु जो आत्मनिष्ठ सांख्ययोगी आत्मरति, आत्मतृप्त और आत्मा में ही सन्तुष्ट है उसका (आत्मज्ञाननिष्ठा को छोड़ दूसरा) कोई कर्तव्य नहीं है॥१७॥

यस्त्विति। **यस्तु** सांख्य आत्मज्ञाननिष्ठ आत्मरति-रात्मन्येव रतिर्न विषयेषु यस्य स **आत्मरतिरेव स्याद्**भवेदा-**त्मतृप्तश्चा**ऽऽत्मनैव तृप्तो नान्नरसादिना **मानवो** मनुष्यः संन्या-**स्यात्मन्येव च संतुष्टः**। संतोषो हि बाह्यार्थलाभे सर्वस्य भवति तमनपेक्ष्याऽऽत्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतत्। य ईदृश आत्मवित्**तस्य कार्यं** करणीयं **न विद्यते** नास्तीत्यर्थः॥१७॥

किंच—

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥१८॥**

परमात्मरति ज्ञानी को कर्म करने से कोई प्रयोजन सिद्ध नहीं होता, वैसे ही न करने से कोई प्रत्यवाय भी नहीं लगता क्योंकि वह ज्ञानी किसी भूतविशेष का आश्रय लेकर किसी भी अर्थ को सिद्ध करना नहीं चाहता, (जिससे कि उसके लिये क्रिया का अनुष्ठान कर सके)॥१८॥

नैवेति। **नैव तस्य** परमात्मरतेः **कृतेन** कर्मणा**ऽर्थः** प्रयोजनमस्ति। अस्तु तर्ह्यकृतेनाकरणेन प्रत्यवायाख्योऽनर्थो, **नाकृतेनेह** लोके **कश्चन** कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणो वा नैवास्ति। **न चास्य सर्वभूतेषु** ब्रह्मादिस्थावरान्तेषु भूतेषु **कश्चिदर्थव्यपाश्रयः** प्रयोजन-निमित्तक्रियासाध्यो व्यपाश्रयो व्यपाश्रयणमालम्बनम्। कंचिद्-भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति। येन तदर्था क्रियाऽनुष्ठेया स्यात्। न त्वमेतस्मिन्सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे॥१८॥

यत एवम्—

**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः॥१९॥**

(सम्यक् ज्ञान में निष्ठा न होने के कारण कर्मानुष्ठान आवश्यक है)

अतः अनासक्त हो निरन्तर कर्तव्य कर्म का अनुष्ठान कर, क्योंकि अनासक्त भाव से कर्म करने वाला पुरुष मोक्ष को प्राप्त करता है॥१९॥

तस्मादिति। **तस्मादसक्तः** सङ्गवर्जितः **सततं** सर्वदा **कार्यं** कर्तव्यं नित्यं **कर्म समाचर** निर्वर्तय। **असक्तो हि** यस्मात्स**माचरन्**नीश्वरार्थं **कर्म** कुर्वन्**परं** मोक्ष**माप्नोति पूरुषः** सत्त्वशुद्धिद्वारेणेत्यर्थः॥१९॥

यस्माच्च—

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि॥२०॥**

पहले जनकादि राजर्षि क्षत्रिय विद्वान् कर्मानुष्ठान द्वारा ही मोक्ष को प्राप्त हुए हैं। लोकसंग्रह दृष्टि से भी तुझे कर्म करना चाहिए।

(अन्य कोई प्रयोजन न रहने पर लोकसंग्रह ही प्रयोजन माना जायेगा और ऐसे प्रयोजन की सिद्धि के लिए भी ज्ञानी को कर्म करना चाहिए) ॥२०॥

कर्मणैवेति। **कर्मणैव हि** यस्मात्पूर्वे क्षत्रिया विद्वांसः **संसिद्धिं** मोक्षं गन्तु**मास्थिताः** प्रवृत्ता **जनकादयो** जनकाश्वपतिप्रभृतयः। यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणां सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः। अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः। अथ मन्यसे पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्यं कर्म कृतं तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति, तथाऽपि प्रारब्धकर्मायत्तस्त्वं **लोकसंग्रहमेवापि** लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं **संपश्यन्कर्तुमर्हसि** ॥२०॥

लोकसंग्रहं कः कर्तुमर्हति कथं चेत्युच्यते—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥**

श्रेष्ठपुरुष जो-जो आचरण करता है दूसरा भी उसी का अनुकरण करता है और वह श्रेष्ठपुरुष लौकिक या वैदिक जिस कर्म को प्रमाणित कर देता है दूसरे लोग उसी का अनुवर्तन करते हैं॥२१॥

यद्यदिति। **यद्यत्कर्माऽऽचरति** येषु येषु **श्रेष्ठः** प्रधान**स्तत्तदेव** कर्माऽऽचरती**तरो**ऽन्यो **जन**स्तदनुगतः। किंच **स** श्रेष्ठो **यत्प्रमाणं कुरुते** लौकिकं वैदिकं वा **लोकस्तदनुवर्तते** तदेव प्रमाणीकरोतीत्यर्थः ॥२१॥

यद्यत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥२२॥**

हे पार्थ! तीनों लोकों में मेरे लिए कोई कर्तव्य नहीं है, कोई ऐसी वस्तु नहीं जो प्राप्त करने योग्य हो और वह मेरे पास न हो, तो भी मैं कर्म करता ही हूँ॥२२॥

न म इति। **न मे** मम **पार्थ नास्ति** न विद्यते **कर्तव्यं त्रिष्वपि लोकेषु किंचन** किंचिदपि। कस्मा-**न्नानवाप्तमप्राप्तमवाप्तव्यं** प्रापणीयं, तथाऽपि **वर्त एव च कर्मण्य**हम्॥२२॥

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥२३॥**

कदाचित् मैं यदि आलस्य का परित्याग कर कर्म न करूँ तो हे पार्थ! ये सभी मनुष्य सभी प्रकार से मेरे ही मार्ग का अनुवर्तन करते हैं॥२३॥

**यदि** पुन**रहं न वर्तेयं जातु** कदाचित्**कर्मण्यत-न्द्रितो**ऽनलसः सन्**मम** श्रेष्ठस्य सतो **वर्त्म** मार्ग**मनुवर्तन्ते मनुष्या** हे **पार्थ सर्वशः** सर्वप्रकारैः॥२३॥

तथा च को दोष इत्याह—

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥२४॥**

यदि मैं कर्म न करूँ तो ये लोक नष्ट हो जायेंगे। इनके संकर का कर्ता मैं होऊँगा और (इन प्रजाओं पर अनुग्रह के लिए प्रवृत्त हुआ) मैं उपघातक बन जाऊँगा (जो मुझ ईश्वर के लिए उचित नहीं है)॥२४॥

उदिति। **उत्सीदेयु**र्विनश्येयु**रिमे** सर्वे **लोका** लोक-स्थितिनिमित्तस्य कर्मणोऽभावात्, **न कुर्यां कर्म चेदहम्,**

**किंच संकरस्य च कर्ता स्याम्। तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्त उपहतिमुपहननं कुर्यामित्यर्थः। ममेश्वरस्याननुरूपमापद्येत॥२४॥**

**यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति—**

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥**

हे भरतवंश में उत्पन्न अर्जुन! जैसे अज्ञानी पुरुष कर्म और उसके फल में आसक्त हुए कर्म करते हैं- (यह मेरा कर्तव्य है मुझे इसका फल मिलेगा- इस रूप में कर्म करते हैं,) वैसे ही आत्मज्ञानी कर्म और उसके फल में आसक्ति न रखता हुआ लोकसंग्रह की इच्छा से शास्त्रविहित कर्म का आचरण करे॥२५॥

**सक्ता इति। सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथाऽसक्तः सन्। तत्किमर्थं करोति तच्छृणु, चिकीर्षुः कर्तुमिच्छुर्लोकसंग्रहम्॥२५॥**

**एवं लोकसंग्रहं चिकीर्षोर्न ममाऽऽत्मविदः कर्तव्यमस्त्यन्यस्य वा लोकसंग्रहं मुक्त्वा। ततस्तस्याऽऽत्मविद इदमुपदिश्यते—**

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्॥२६॥**

कर्म में आसक्त अज्ञानियों की बुद्धि में ज्ञानी भेद उत्पन्न न करे, प्रत्युत अत्यन्त सावधानी के साथ विद्वान् पुरुष सभी कर्मों को करता हुआ अज्ञानी को उसमें लगाये रखे॥२६॥

नेति। बुद्धेर्भेदो बुद्धिभेदो मयेदं कर्त्तव्यं भोक्तव्यं चास्य कर्मणः फलमिति निश्चितरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं **न जनयेन्नो**त्पादये**दज्ञानाम**विवेकिनां **कर्मसङ्गिनां** कर्मण्यासक्तानामासङ्गवताम्। किंतु कुर्या**ज्जोषयेत्**कारये**त्सर्व-कर्माणि विद्वान्**स्वयं तदेवाविदुषां कर्म, **युक्तो**ऽभियुक्तः **समाचरन्**॥२६॥

अविद्वानज्ञः कथं कर्मसु सज्जत इत्याह—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहंकारविमूढात्मा कर्ताऽहमिति मन्यते॥ २७॥**

(सत्त्व, रज, तम इन गुणों की साम्यावस्था को प्रकृति कहते हैं, उसी का दूसरा नाम प्रधान और माया भी है। कार्य स्थूल एवं करण सूक्ष्मशरीर उसके विकार हैं), उन्हीं से सभी लौकिक तथा शास्त्रीय कर्म सभी प्रकार से किये जाते हैं। कार्यकरण में अहंकार (आत्मबुद्धि) रखने वाला विमूढ़ अविद्या से आत्मा में कर्मों का आरोपकर उन कर्मों का- मैं कर्ता हूँ- ऐसा मानता है। (यही कर्मासक्ति का कारण और प्रकार भी है)॥२७॥

प्रकृतेरिति। **प्रकृतेः** प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृते**र्गुणै**र्विकारैः कार्यकरणरूपैः **क्रियमाणानि कर्माणि** लौकिकानि शास्त्रीयाणि च **सर्वशः** सर्वप्रकारै**रहंकारविमूढात्मा** कार्यकरणसंघातात्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढ आत्माऽन्तःकरणं यस्य सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणाम**हं कर्तेति मन्यते**॥२७॥

यः पुनर्विद्वान्—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते॥ २८॥**

किन्तु हे महाबाहो! जो विद्वान् गुणविभाग और कर्मविभाग के तत्त्व को जानता है, वह गुण ही गुण में वर्तते हैं, ऐसा समझकर उनमें आसक्ति नहीं करता॥२८॥

तत्त्वविदिति। **तत्त्ववित्तु महाबाहो** कस्य तत्त्ववित्-**गुणकर्मविभागयोर्**गुणविभागस्य कर्मविभागस्य च तत्त्व-विदित्यर्थः। **गुणाः** करणात्मका **गुणेषु** विषयात्मकेषु **वर्तन्ते** नाऽऽत्मेति **मत्वा न सज्जते** सक्तिं न करोति॥२८॥

ये पुनः—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत्॥२९॥**

किन्तु जो प्रकृति के गुणों से अत्यन्त मोहित हैं ऐसे अज्ञानी जीव गुणों के व्यापार में- (हम फल के लिए कर्म करते हैं- इस प्रकार आसक्त हो जाते हैं।) उन कर्मासक्त कर्मफलमात्र को देखने वाले मन्दबुद्धि पुरुष को 'अकृत्स्नवित्' कहा गया है। ऐसे अज्ञानियों को 'कृत्स्नवित्' आत्मज्ञानी स्वयं विचलित न करे॥२९॥

प्रकृतेरिति। **प्रकृतेर्गुणैः** सम्यङ्मूढाः संमोहिताः सन्तः **सज्जन्ते** गुणानां कर्मसु **गुणकर्मसु** वयं कर्म कुर्मः फलायेति, **तान्**कर्मसङ्गिनो**ऽकृत्स्नविदः** कर्मफलमात्रदर्शिनो **मन्दान्**मन्दप्रज्ञान्**कृत्स्नविद्**आत्मवित्स्वयं **न विचालयेद्**-बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः॥२९॥

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्य-मित्युच्यते—

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥३०॥**

मुझ (सर्वात्मा, सर्वान्तर्यामी, सर्वज्ञ परमेश्वर) में विवेक बुद्धि से-

'मैं ईश्वर के लिए भृत्य की भाँति कर्म करता हूँ'- इस प्रकार अध्यात्मचित्त से कर्मों को समर्पणकर आशा, ममता एवं संताप को छोड़कर युद्ध करो ॥३०॥

मयीति। **मयि** वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि **सर्वाणि कर्माणि संन्यस्य** निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याऽहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या। किंच **निराशीस्त्यक्ताशीर्निर्ममो** ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो **भूत्वा युध्यस्व विगतज्वरो** विगतसंतापो विगतशोकः सन्नित्यर्थः ॥३०॥

यदेतन्मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा—

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥३१॥**

प्रमाण के सहित जो यह मेरा मत कर्तव्यकर्मानुष्ठान के लिए कहा गया है, मेरे इस सिद्धान्त का जो मनुष्य श्रद्धा युक्त हो मुझ सर्वान्तर्यामी वासुदेव में दोष न देखते हुए अनुष्ठान करते हैं, वे भी बन्धन के कारण धर्माधर्म से मुक्त हो जाते हैं॥३१॥

ये म इति। **ये मे** मदीय**मिदं मतमनुतिष्ठन्त्य**नुवर्तन्ते **मानवा** मनुष्याः **श्रद्धावन्तः** श्रद्दधाना **अनसूयन्तो**ऽसूयां च मयि गुरौ वासुदेवेऽकुर्वन्तो **मुच्यन्ते तेऽ**प्येवंभूताः **कर्मभि**र्धर्माधर्माख्यैः ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः॥३२॥**

किन्तु जो लोग मेरे इस सिद्धान्त का अनुष्ठान नहीं करते, उल्टे मुझमें तथा मेरे इस सिद्धान्त में दोष देखते हैं उन सर्वज्ञानविमूढ़ मूर्खों को परमार्थ से भ्रष्ट ही जानो॥३२॥

ये त्विति। **ये तु तद्विपरीता एतन्मम मतमभ्यसूयन्तो** निन्दन्तो **नानुतिष्ठन्ति** नानुवर्तन्ते **मे मतं** सर्वेषु ज्ञानेषु विविधं मूढास्ते, **सर्वज्ञानविमूढांस्तान्विद्धि नष्टान्नाशं** गता**नचेतसो**ऽविवेकिनः ॥३२॥

कस्मात्पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्ति परधर्मान-नुतिष्ठन्ति स्वधर्मं च नानुवर्तन्ते, त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्, तत्राऽऽह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥ ३३॥**

(पूर्वकृत धर्माधर्म आदि संस्कार जो वर्तमान जन्म में अभिव्यक्त होता है उसे प्रकृति कहते हैं, वह सभी की भिन्न-भिन्न होती है।) अपनी उसी प्रकृति के अनुसार सभी जीव चेष्टा करते हैं। मूर्खों की बात कौन कहे, ज्ञानी भी अपनी प्रकृति के अनुसार ही चेष्टा करता है, तो मेरा अथवा अन्य किसी का निग्रह क्या करेगा॥३३॥

सदृशमिति। **सदृश**मनुरूपं **चेष्टते** कस्याः **स्वस्याः** स्वकीयायाः **प्रकृतेः** प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तु**र्ज्ञानवानपि** किं पुनर्मूर्खः। तस्मात्**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति** मम वाऽन्यस्य वा॥३३॥

यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव **चेष्टते** नच प्रकृतिशून्यः कश्चिदस्ति, ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रा-नर्थक्यप्राप्ताविदमुच्यते—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥ ३४॥**

प्रत्येक इन्द्रिय का अपने-अपने विषयो में राग तथा द्वेष अवश्यम्भावी है, उस राग-द्वेष से बचने में ही पुरुष प्रयत्न की आवश्यकता है। ये दोनों कल्याणकामी पुरुष के शत्रु हैं। अतः इनके अधीन नहीं होना चाहिए॥३४॥

इन्द्रियस्येति। **इन्द्रियस्येन्द्रियस्यार्थे** सर्वेन्द्रियाणामर्थे शब्दादिविषय इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे **राग-द्वेषाववश्यंभाविनौ**। तत्रायं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयो**र्वशं नाऽऽगच्छेत्**। या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति। यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति, न प्रकृतिवशः। तस्मा**त्तयो** रागद्वेषयोर्वशं **न** गच्छेत्। यत**स्तौ ह्यस्य** पुरुषस्य **परिपन्थिनौ** श्रेयोमार्गस्य विघ्न-कर्तारौ तस्कराविवेत्यर्थः॥३४॥

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा, परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति, तदसत्—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥३५॥**

(जिस वर्ण और जिस आश्रम के लिए शास्त्र ने जिस कर्तव्य कर्म का विधान किया है वह उसका स्वधर्म है, उससे भिन्न विहित होने पर भी उसके लिए विधान नहीं किया गया है इसलिए वह परकीय धर्म है।) उस परधर्म का अच्छी प्रकार से अनुष्ठान किये जाने की अपेक्षा किसी अंश में अपना धर्म विगुण भी रह गया हो तो भी वह कल्याणकारक है। स्वधर्म में स्थित पुरुष का मरण भी श्रेयस्कर है किन्तु परधर्म नरकादि रूप भय को भी देता है॥३५॥

श्रेयानिति। **श्रेयान्**प्रशस्यतरः **स्वो** धर्मः **स्वधर्मो विगुणो**ऽपि विगतगुणोऽप्यनुष्ठीयमानः **परधर्मात्स्वनुष्ठि-**

तात्साद्गुण्येन संपादितादपि, स्वधर्मे स्थितस्य **निधनं** मरणमपि **श्रेयः** परधर्मे स्थितस्य जीवितात्, कस्मात्**परधर्मो भयावहः**, नरकादिलक्षणं भयमावहति यतः ॥३५॥

यद्यप्यनर्थमूलं "ध्यायतो विषयान्पुंसः" ( गी. २.६२ ) "रागद्वेषौ ह्यस्य परिपन्थिनौ" ( गी. ३.३४ ) इति चोक्तं विक्षिप्तमनवधारितं च तदुक्तं तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिंस्तदुच्छेदाय यत्नं कुर्यामिति—

**अर्जुन उवाच—**

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥**

अर्जुन ने पूछा किससे प्रेरित हुआ यह पुरुष न चाहता हुआ भी जबरन किसी से लगाये हुए की भाँति पाप कर बैठता है। हे वृष्णिकुलप्रसूत भगवन्! (आप हमें बतलायें) ॥३६॥

अथेति। **अथ केन** हेतुभूतेन **प्रयुक्तः** सन्राज्ञेव भृत्योऽयं **पापं** कर्म **चरत्या**चरति **पूरुषः** स्वय**मनिच्छन्नपि** हे **वार्ष्णेय** वृष्णिकुलप्रसूत **बलादिव नियोजितो** राज्ञेवेत्युक्तो दृष्टान्तः ॥३६॥

शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि—

**श्रीभगवानुवाच—**

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥**

श्रीभगवान् ने कहा- यह काम और यह क्रोध जो रजोगुण का कारण है और कार्य भी है यह महापेटू है अतएव महापापी है इसे कल्याण मार्ग में शत्रु समझ ॥३७॥

**ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।**
**वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना॥ (विष्णु. पु. ६.५.७४)**

**ऐश्वर्यादिषट्कं यस्मिन्वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते।**

**उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।**
**वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥ (विष्णु. पु. ६.५.७८)**

**उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति।**

काम इति। **काम एष** सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां, स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते। अतः **क्रोधोऽप्येष** एव। **रजोगुणसमुद्भवो** रजश्च तद्गुणश्च रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवो, रजोगुणस्य वा समुद्भवः। कामो ह्युद्भूतो रजः प्रवर्तयन्पुरुषं प्रवर्तयति। तृष्णया ह्यहं कारित इति दुःखितानां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते। **महाशनो** महदशनमस्येति महाशनोऽत एव **महापाप्मा**। कामेन हि प्रेरितो जन्तुः पापं करोति। अतो **विद्ध्येनं काममिह** संसारे **वैरिणम्**॥३७॥

कथं वैरीति दृष्टान्तैः प्रत्याययति—

**धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च।**
**यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम्॥३८॥**

(यह काम शत्रु कैसे है? इस बात को तीन दृष्टान्तों से समझाते हैं) जिस प्रकार साथ-साथ उत्पन्न होने वाले अप्रकाशात्मक धूम से प्रकाशात्मक वह्नि आवृत हो जाती है और जैसे मैल से दर्पण ढक

जाता है एवं जिस प्रकार जेर से गर्भ ढका रहता है, ऐसे ही काम से ज्ञान आवृत रहता है॥३८॥

धूमेनेति। **धूमेन** सहजेनाऽऽ**व्रियते वह्निः** प्रकाशात्मकोऽप्रकाशात्मकेन **यथा** वाऽऽ**दर्शो मलेन च यथोल्बेन** गर्भवेष्टनेन जरायुणाऽऽ**वृत** आच्छादितो **गर्भस्तथा तेनेदमावृम्**॥३८॥

किं पुनस्तदिदंशब्दवाच्यं यत्कामेनाऽऽवृतमित्युच्यते—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥३९॥**

हे कुन्ती पुत्र अर्जुन! कठिनाई से पूर्ण होने वाले, अग्नि के सदृश, ज्ञानी के सदा शत्रु इस काम से आत्मा का ज्ञान अथवा कर्तव्याकर्तव्य बोधरूप ज्ञान आवृत रहता है॥३९॥

आवृतमिति। **आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा**। ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति। दुःखी च भवति नित्यमेव। अतोऽसौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य। स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाऽहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी। किंरूपेण **कामरूपेण** काम इच्छैव रूपमस्येति कामरूपस्तेन **दुष्पूरेण** दुःखेन पूरणमस्येति दुष्पूरस्तेना**नलेन** नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन॥३९॥

किमधिष्ठानः पुनः कामो ज्ञानस्याऽऽवरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हणं कर्तुं शक्यत इति—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥४०॥**

इन्द्रियाँ, मन और बुद्धि इस काम के आश्रय हैं, इन्हीं के द्वारा यह काम ज्ञान पर आवरण डालकर जीवात्मा को मोहित करता रहता है ॥४०॥

इन्द्रियाणीति। **इन्द्रियाणि मनो बुद्धिश्चास्य** काम-स्याधिष्ठानमाश्रय **उच्यते। एतै**रिन्द्रियादिभिराश्रयै**र्विमोहयति** विविधं मोहयत्येष कामो **ज्ञानमावृत्या**ऽऽच्छाद्य **देहिनं** शरीरिणम् ॥४०॥

यत एवम्—

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥**

अत: हे भरतवंश में श्रेष्ठ अर्जुन! पहले तुम इन्द्रियों को नियम में करो, तत्पश्चात् ज्ञान एवं विज्ञान के नाशक इस माहापापी काम का मूलत: परित्याग कर डालो ॥४१॥

तस्मादिति। **तस्मात्त्वमिन्द्रियाण्यादौ** पूर्वं **नियम्य** वशीकृत्य **भरतर्षभ पाप्मानं** पापाचारं कामं **प्रजहिहि** परित्यज, **एनं** प्रकृतं वैरिणं **ज्ञानविज्ञाननाशनं** ज्ञानं शास्त्रत आचार्यतश्चाऽऽत्मादीनामवबोध:, विज्ञानं विशेषतस्त-दनुभवस्तयोर्ज्ञानविज्ञानयो: श्रेय:प्राप्तिहेत्वोर्नाशनं प्रजहिह्यात्मन: परित्यजेत्यर्थ: ॥४१॥

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहीत्युक्तं तत्र किमाश्रय: कामं जह्यादित्युच्यते—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्य: परं मन:।**
**मनसस्तु परा बुद्धिर्यो बुद्धे: परतस्तु स: ॥४२॥**

इन्द्रियों की अपेक्षा मन 'पर' कहा गया है और मन से श्रेष्ठ बुद्धि है किन्तु जो बुद्धि से भी पर है वह बुद्धि का साक्षी परमात्मा है ॥४२॥

इन्द्रियाणीति। **इन्द्रियाणि** श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य

जब तक स्वरूप निष्ठा नहीं हो जाती तब तक भोक्ताभाव मिट नहीं सकता है
सभी विकारों का मूल भोक्ता भाव ही है बन्ध रूप भी भोक्ता भाव।



**पराणि** प्रकृष्टान्या**हुः** पण्डिताः। तथे**न्द्रियेभ्यः परं मनः** संकल्पविकल्पात्मकम्। तथा **मनसस्तु परा बुद्धिर्निश्च**-यात्मिका। तथा **यः** सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोह-यतीत्युक्तं **बुद्धेः परतस्तु स** बुद्धेर्द्रष्टा परमात्मा॥४२॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम्॥४३॥**

आदितः श्लो. १६२

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः॥३॥*

हे महाबाहो! इस प्रकार बुद्धि से 'पर' आत्मा को जानकर शुद्ध मन से देह, इन्द्रियादिरूप आत्मा को वश में करके इस दुर्जय काम-शत्रु को मार डालो॥४३॥

*इस प्रकार श्रीमद्भगवद्गीता की श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी द्वारा कर्मयोग नामक तृतीयाध्याय की मिताक्षरा व्याख्या सम्पूर्ण हुई॥३॥*

एवमिति। **एवं बुद्धेः परमाऽऽत्मानं बुद्ध्वा** ज्ञात्वा **संस्तभ्य** सम्यक्स्तम्भनं कृत्वा स्वेनैवा**ऽऽत्मना** संस्कृतेन मनसा सम्यक्समाधायेत्यर्थः। **जह्येनं शत्रुं** हे **महाबाहो कामरूपं दुरासदं** दुःखेनाऽऽसद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति॥४३॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपाद-शिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये कर्मयोगो नाम तृतीयोऽध्यायः॥३॥*

**तृतीयाह्निकम्॥३॥**

1- देह की प्रकरण
2- लोकसंग्रह प्रकरण
3- अनासक्ति प्रकरण
4- निष्ठा का प्रकरण

# श्रीमद्भगवद्गीता

## अथ चतुर्थोऽध्यायः

योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणः ससंन्यासः कर्मयोगोपायो, यस्मिन्वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवता अतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान्—

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥ १ ॥

सर्गारम्भ में इस अविनाशी योग को मैंने सूर्य के प्रति कहा था, सूर्य ने अपने पुत्र मनु से कहा और मनु ने अपने पुत्र इक्ष्वाकु से कहा था॥ १॥

**इममध्यायद्वयेनोक्तं योगं विवस्वत** आदित्याय सर्गादौ **प्रोक्तवानहं** जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय। तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम्। ब्रह्मक्षत्रे परिपालिते जगत्परिपालयितुमलम्। **अव्ययमव्ययफलत्वात्**। न ह्यस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति। स च **विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे** स्वपुत्रायाऽऽदिराजाया**ब्रवीत्**॥ १॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परंतप॥ २ ॥

इस प्रकार परम्परा से प्राप्त इस योग को राजर्षियों ने जाना। हे परंतप! वही योग इस संसार में दीर्घकाल से नष्ट हो गया है॥ २॥

ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाऽऽभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत्। एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः॥२६॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्॥२७॥**

जिस योगी का मन अत्यन्त शान्त है, जिसका मोहादिक्लेशरूप रजोगुण मिट गया है, ऐसे धर्माधर्मादि से रहित ब्रह्मभूत योगी को उत्तम सुख प्राप्त होता है॥२७॥

**प्रशान्तमनसं** प्रशान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं **ह्येनं योगिनं सुखमुत्तमं** निरतिशयमुपैत्युपगच्छति। **शान्तरजसं** प्रक्षीणमोहादिक्लेशरजसमित्यर्थः। **ब्रह्मभूतं** जीवन्मुक्तं ब्रह्मैव सर्वमित्येवंनिश्चयवन्तं ब्रह्मभूत**मकल्मषम**धर्मादिवर्जितम्॥२७॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते॥२८॥**

यथोक्त रीति से योगाभ्यास करने वाला, योग के अन्तराय से शून्य, विगतकल्मष योगी अनायास ही ब्रह्म के साथ संस्पर्श रखने वाले आत्यन्तिक सुख को प्राप्त करता है। (योगाभ्यास का क्रम पहले बतलाया जा चुका है) ॥२८॥

युञ्जन्निति। **युञ्जन्नेवं** यथोक्तेन क्रमेण **योगी** योगान्तरायवर्जितः **सदाऽऽत्मानं विगतकल्मषो** विगतपापः **सुखेनानायासेन ब्रह्मसंस्पर्शं** ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं **सुखमत्यन्तम**न्तमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशय**मश्नुते** व्याप्नोति॥२८॥

इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं, सर्वसंसारविच्छेदकारणं, तत्प्रदर्श्यते—

**सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥२९॥**

ब्रह्मात्मैकत्वविषयक ज्ञान वाला योगी सभी प्राणियों में स्थित अपने आत्मा को और आत्मा में ब्रह्मा से लेकर स्तम्बपर्यन्त सभी प्राणियों को (अभेदभाव से) देखता है॥२९॥

**सर्वभूतस्थं** सर्वेषु भूतेषु स्थितं स्वमात्मानं **सर्वभूतानि चाऽऽत्मनि** ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानी**क्षते** पश्यति **योगयुक्तात्मा** समाहितान्तःकरणः **सर्वत्रसमदर्शनः** सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्रसमदर्शनः॥२९॥

एतस्याऽऽत्मैकत्वदर्शनस्य फलमुच्यते—

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥३०॥**

जो (अभेददर्शी सबकी आत्मा) मुझ वासुदेव को सभी भूतों में और ब्रह्मादि भूतसमुदाय को मुझ सर्वात्मा वासुदेव में देखता है ऐसे आत्मैकत्वदर्शी योगी को मैं ईश्वर कभी परोक्ष नहीं होता और वह ज्ञानी मुझ परमेश्वर के लिए कभी परोक्ष नहीं होता (क्योंकि वह और मैं दोनों एक ही तो हैं)॥३०॥

**यो मां पश्यति** वासुदेवं सर्वस्याऽऽत्मानं **सर्वत्र** सर्वेषु भूतेषु **सर्वं च** ब्रह्मादिभूतजातं **मयि** सर्वात्मनि **पश्यति तस्यै**वमात्मैकत्वदर्शिनो**ऽहम**ीश्वरो **न प्रणश्यामि** न परोक्षतां गमिष्यामि। **स च मे न प्रणश्यति** स च विद्वान्मम

वासुदेवस्य न प्रणश्यति न परोक्षीभवति। तस्य च मम चैकात्मकत्वात्। स्वात्मा हि नामाऽऽत्मनः प्रिय एव भवति। यस्माच्चाहमेव सर्वात्मैकत्वदर्शी ॥३०॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥**

जो सम्पूर्ण भूतों में स्थित मुझ परमेश्वर को अभेद भाव से भजता है, वह सम्यग्दर्शी योगी सभी प्रकार से वर्तता हुआ भी मुझ विष्णु के परमपद में विद्यमान है। (अतः वह नित्यमुक्त ही है) ॥३१॥

इत्येतत्पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते। **सर्वथा** सर्वप्रकारैर्**वर्तमानोऽपि** सम्यग्दर्शी **योगी मयि** वैष्णवे परमे पदे **वर्तते** नित्यमुक्त एव, स न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः ॥३१॥

किंचान्यत्—

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥**

हे अर्जुन! अपने को ही जो उपमा के रूप में सामने रखकर सभी भूतों में तुल्यदर्शन करता है, (अर्थात् अनुकूल-प्रतिकूल सुख और दुःख को सभी प्राणियों में समानरूप से देखता है, वह अहिंसक किसी से प्रतिकूल व्यवहार नहीं करता, जो इस प्रकार) अहिंसक तत्त्वदर्शी योगी है वह सभी योगियों में मुझे श्रेष्ठ मान्य है ॥३२॥

**आत्मौपम्येना**ऽऽत्मा स्वयमेवोपमीयते इत्युपमा तस्या उपमाया भाव औपम्यं तेनाऽऽत्मौपम्येन **सर्वत्र** सर्वभूतेषु **समं** तुल्यं **पश्यति योऽर्जुन**। स च किं समं पश्यतीत्युच्यते। यथा मम सुखमिष्टं तथा सर्वप्राणिनां **सुखमनु**कूलम्। वाशब्दश्चार्थे। **यदि वा** यच्च **दुःखं** मम प्रति-

कूलमनिष्टं यथा, तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूल-मित्येवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्व-भूतेषु समं पश्यति न कस्यचित्प्रतिकूलमाचरत्यहिंसक इत्यर्थः। य एवमहिंसकः सम्यग्दर्शननिष्ठः **स योगी परम** उत्कृष्टो **मतो**ऽभिप्रेतः सर्वयोगिनां मध्ये॥३२॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःख-संपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायम्—

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम्॥३३॥

अर्जुन ने कहा— हे मधुसूदन! आप ने जो यह योग समत्वरूप से बतलाया है, अपने मन की चंचलता के कारण मैं इस योग की स्थिर स्थिति को नहीं देख रहा हूँ॥३३॥

**योऽयं योगस्त्वया प्रोक्तः साम्येन** समत्वेन हे **मधु-सूदन, एतस्य** योगस्या**हं न पश्यामि** नोपलभे **चञ्चल-त्वा**न्मनसः, किं, **स्थिरा**मचलां **स्थितिं** प्रसिद्धमेतत्॥३३॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥३४॥

हे कृष्ण! मन अत्यन्त चंचल है, शरीर और इन्द्रियों को विक्षिप्त करने वाला प्रमथनशील एवं बलवान है, ऐसे मन को वायु को रोकने के समान दुर्निरोध मैं मानता हूँ॥३४॥

चञ्चलमिति। **चञ्चलं हि मनः कृष्णे**ति कृषतेर्विलेख-नार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात्कृष्णः। न केवल-मत्यर्थं चञ्चलं **प्रमाथि** च प्रमथनशीलं प्रमथ्नाति शरीरमि-

विद्रान - हेतव्य: हि दोषाय:।

चंचलता - मन बार बार विषयों को बदलता रहता एक विषय पर स्थिर नहीं रहता है यही चंचलता है
स्वाधीनता - जो कालोन है वह स्वरूप रूप से होता जाय अकरणीय भी चित्त में उत्पन्न हो न हो।



न्द्रियाणि च विक्षिपति परवशीकरोति। किंच **बलवन्न** केनचिन्नियन्तुं शक्यं, दुर्निवारत्वात्। किंच **दृढं** तन्तुनागव-दच्छेद्यं **तस्यैवं**भूतस्य मनसोऽ**हं निग्रहं** निरोधं **मन्ये वायोरिव**। यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो **दुष्करं** मन्य इत्यभिप्रायः॥३४॥

एवमेतद्यथा ब्रवीषि—

श्रीभगवानुवाच—

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥३५॥**

(इस प्रकार जैसा तुमने समझा है), हे महाबाहो! निःसन्देह यह मन दुर्निग्रह एवं चंचल है, फिर भी हे कुन्तीपुत्र अर्जुन! (किसी चित्त भूमि में नमोवृत्ति को समानरूप से प्रवाहित करना अभ्यास है और दृष्टादृष्ट भोगों में सदा दोष देखने से जो वैतृष्ण्य उत्पन्न होता है उसे वैराग्य कहते हैं। ऐसे) अभ्यास एवं वैराग्य के द्वारा चित्त के विक्षेप रूप प्रचार को निगृहीत किया जा सकता है। (वैराग्य द्वारा चित्त को अनात्मवस्तु से पृथक् किया जा सकता है और अभ्यास के द्वारा सच्चिदानन्दघन आत्मा में चित्त को स्थिर किया जा सकता है)॥३५॥

**असंशयं** नास्ति संशयो **मनो दुर्निग्रहं चल**मित्यत्र हे **महाबाहो**। किं**त्वभ्यासेन** त्वभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य। वैराग्यं नाम दृष्टा-दृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च **वैराग्येण गृह्यते**। विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः॥३५॥

यः पुनरसंयतात्मा तेन—

**असंयतात्मना योगो दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥३६॥**

पर जो असंयत आत्मा है (अर्थात् जिनका अन्त:करण अभ्यास एवं वैराग्य के द्वारा संयमित नहीं हो पाया है) ऐसे पुरुष के द्वारा यह योग कठिनाई से प्राप्त हो सकेगा। ऐसी मेरी मान्यता है (किन्तु जिसने अभ्यास एवं वैराग्य से अपने मन को वश में कर लिया है) उस वश्यात्मा, यत्नशील योगी को बार-बार यत्न करने पर पूर्वोक्त उपाय से योग प्राप्त हो सकता है॥३६॥

**असंयतात्मना**ऽभ्यासवैराग्याभ्यामसंयत आत्माऽन्तः-करणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना **योगो दुष्प्रापो** दुःखेन प्राप्यत **इति मे मतिः**। यस्तु पुनर्वश्यात्माऽभ्यासवैरा-ग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन **वश्यात्मना तु यतता** भूयोऽपि प्रयत्नं कुर्वता **शक्योऽवाप्तुं** योग **उपायतो** यथोक्तादुपायात्॥३६॥

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्षसाधनं सम्यग्-दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्य—

**अर्जुन उवाच—**

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति॥३७॥**

हे कृष्ण! योगमार्ग में जो आस्तिकबुद्धिरूप श्रद्धा से युक्त तो हैं किन्तु अन्तकाल में जिसका मन योगमार्ग से विचलित हो गया, ऐसा भ्रष्टस्मृति, शिथिलप्रयत्न वाला योगी योग के फल सम्यक् ज्ञान को न प्राप्तकर किस गति को प्राप्त होता है॥३७॥

**अयतिरप्रयत्नवान्योगमार्गे श्रद्धया**ऽऽस्तिक्यबुद्ध्या **चोपेतो योगादन्तकाले**ऽपि चलितं मानसं मनो यस्य स

योग से कन्तिमान हों। मार्गों से दैन्य भग हों।



**चलितमानसो** भ्रष्टस्मृतिः सोऽप्राप्य **योगसंसिद्धिं** योगफलं सम्यग्दर्शनं **कां गतिं** हे **कृष्ण गच्छति**॥३७॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि॥३८॥**

कर्ममार्ग एवं योगमार्ग उभयविभ्रष्ट योगी छिन्न बादल की भाँति नष्ट तो नहीं हो जाता अथवा आश्रयरहित तो नहीं हो जाता क्योंकि हे महाबाहो! ब्रह्मप्राप्ति के मार्ग में वह विमूढ़ हो चुका है॥३८॥

कच्चिदिति। **कच्चित्किं नोभयविभ्रष्टः** कर्ममार्गाद्योगमार्गाच्च विभ्रष्टः **संञ्छिन्नाभ्रमिव नश्यति** किंवा न नश्यत्य**प्रतिष्ठो** निराश्रयो हे **महाबाहो विमूढः** सन्**ब्रह्मणः पथि** ब्रह्मप्राप्तिमार्गे॥३८॥

**एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः।**
**त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते॥३९॥**

हे कृष्ण! मेरे इस संशय को पूर्णरूप से आप ही दूर कर सकते हैं, आप के अतिरिक्त कोई अन्य ऋषि या देवता इस संशय को नहीं मिटा सकते। अतः हमारे इस संदेह को आप ही दूर करें॥३९॥

एतदिति। **एतन्मे** मम **संशयं कृष्ण च्छेत्तु**मपनेतु**मर्हस्यशेषतस्त्वदन्य**स्त्वत्तोऽन्य ऋषिर्देवो वा **छेत्ता** नाशयिता **संशयस्यास्य न हि** यस्मा**दुपपद्यते** संभवत्यतस्त्वमेव च्छेत्तुमर्हसीत्यर्थः॥३९॥

**श्रीभगवानुवाच—**

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति॥४०॥**

भगवान् श्रीकृष्ण ने कहा कि हे पार्थ! ऐसे साधक का इस लोक

अथवा परलोक में विनाश नहीं होता। (पहले की अपेक्षा हीन जन्म की प्राप्ति को नाश कहते हैं, वह योगी का नहीं होता क्योंकि) कल्याणकारक शुभकर्म करने वाला कोई भी दुर्गति को प्राप्त नहीं करता॥४०॥

पार्थेति। हे **पार्थ नैवेह** लोके **नामुत्र** परस्मिन्वा लोके **विनाशस्तस्य विद्यते** नास्ति। नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः। स योगभ्रष्टस्य नास्ति, **न हि** यस्मात्**कल्याणकृ**च्छुभकृत्**कश्चिद्दुर्गतिं** कुत्सितां गतिं हे **तात** तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्र इति पुत्रोऽपि तात उच्यते शिष्योऽपि पुत्र उच्यते, **गच्छति**॥४०॥ किंत्वस्य भवति—

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥४१॥**

(योगमार्ग में प्रवृत्त पुरुष प्रसंगानुसार संन्यासी है), वह अश्वमेधादि पुण्यकर्म करने वालों के लोकों को प्राप्तकर वहाँ अनेक दिव्यवर्षों तक वास करते हुए तदुचित भोगों को भोगकर वहाँ के भोग क्षीण होने पर यथोक्त कर्म करने वाले, ऐश्वर्यसम्पन्न, पवित्र गृह में योगभ्रष्ट उत्पन्न होता है॥४१॥

योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्**प्राप्य** गत्वा **पुण्यकृता**मश्वमेधादियाजिनां **लोकांस्तत्र** चो**षित्वा** वासमनुभूय **शाश्वती**र्नित्याः **समाः** संवत्सरांस्तद्भोगक्षये **शुचीनां** यथोक्तकारिणां **श्रीमतां** विभूतिमतां **गेहे** गृहे **योगभ्रष्टोऽभिजायते**॥४१॥

**अथवा योगिनामेव कुले भवति धीमताम्।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्॥४२॥**

अथवा ज्ञानवान् योगियों के ही कुल में जन्म लेता है (जो लोक दृष्टि से श्रीमान् कुल नहीं अपितु दरिद्र हैं। साधना की दृष्टि से धनवानों

भो॰



के कुल में जन्म लेने की अपेक्षा) धनहीन, ज्ञानसम्पन्न व्यक्ति के कुल में जन्म लेना अत्यन्त दुर्लभ यानि श्रेष्ठ माना गया है॥४२॥

अथवेति। **अथवा** श्रीमतां कुलादन्यस्मिन्**योगिनामेव** दरिद्राणां **कुले भवति** जायते **धीमतां** बुद्धिमताम्। **एतद्धि** जन्म यद्दरिद्राणां योगिनां कुले **दुर्लभतरं** दुःखलभ्यतरं पूर्वमपेक्ष्य **लोके जन्म यदीदृशं** यथोक्तविशेषणे कुले॥४२॥

यस्मात्—

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥४३॥**

हे अर्जुन! वहाँ पर पूर्वदेह में किये हुए बुद्धिसंयोग को योगियों के कुल में जन्म लेने वाला साधक अनायास ही प्राप्त कर लेता है, (इस बुद्धिसंयोग के लिये अलग से प्रयत्न उसे नहीं करना पड़ता। तत्पश्चात् पूर्वजन्मकृत संस्कार के कारण संसिद्धि के निमित्त श्रवणादि अनुष्ठानविषयक प्रयत्न अधिक करने लग जाता है)॥४३॥

**तत्र** योगिनां कुले **तं बुद्धिसंयोगं** बुद्ध्या संयोगं बुद्धिसंयोगं **लभते पौर्वदेहिकं** पूर्वस्मिन्देहे भवं पौर्वदेहिकं **यतते च** प्रयत्नं करोति **ततस्**तस्मात्पूर्वकृतात्संस्काराद्**भूयो** बहुतरं **संसिद्धौ** संसिद्धिनिमित्तं हे **कुरुनन्दन**॥४३॥

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते॥४४॥**

उस योगभ्रष्ट पुरुष ने पूर्वजन्म में जो अभ्यास किया था, उसी बलवान् अभ्यास के कारण परवश हुआ भी साधना की ओर आकृष्ट हो जाता है। वह योग के स्वरूप को जानने की इच्छा वाला जिज्ञासु जो प्रसंगानुरूप योगभ्रष्ट संन्यासी है, वह भी वेदोक्त कर्मानुष्ठान के फल को पार कर जाता है। (फिर भला जो योग को जानकर तन्निष्ठ हो अभ्यास करता हो, उसके विषय में कहना ही क्या है)॥४४॥

यः पूर्वजन्मनि कृतोऽभ्यासः स **पूर्वाभ्यासस्तेनैव** बलवता **ह्रियते हि** यस्माद**वशोऽपि स** योगभ्रष्टो न कृतं चेद्योगाभ्याससंस्काराद्बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेण ह्रियते। अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव। तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः। **जिज्ञासुरपि योगस्य** स्वरूपं ज्ञातुमिच्छन्योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः सामर्थ्यात्सोऽपि **शब्दब्रह्म** वेदोक्तकर्मानुष्ठानफल**मतिवर्तते**ऽपाकरिष्यति किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात्॥४४॥

कुतश्च योगित्वं श्रेय इति—

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥४५॥**

अनेक जन्मों के साधनों से संशुद्ध पुरुष जब ज्ञान प्राप्त करता है, तब वह उत्कृष्ट गति प्राप्त कर लेता है। तात्पर्य यह है कि शीघ्र मुक्ति प्राप्ति के लिए अधिक प्रयत्न करना चाहिए, अल्प प्रयत्न करने वाला साधक विलम्ब से मोक्ष प्राप्त करता है॥४५॥

**प्रयत्नाद्यतमानो**ऽधिकं यतमान इत्यर्थः। तत्र **योगी** विद्वान्**संशुद्धकिल्बिषो** विशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धो**ऽनेकजन्मसंसिद्धस्ततो** लब्धसम्यग्दर्शनः स**न्याति परां** प्रकृष्टां **गतिम्**॥४५॥

यस्मादेवं तस्मात्—

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥४६॥**

योगी तपस्वियों से एवं शास्त्रज्ञानी से भी बड़ा माना गया है वैसे ही

कर्मियों की अपेक्षा भी योगी पुरुष श्रेष्ठ है। अतः हे अर्जुन! तू योगी बन जा॥४६॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि**, ज्ञानमत्र शास्त्रपाण्डित्यं तद्वद्भ्योऽपि **मतो** ज्ञातोऽ**धिकः** श्रेष्ठ इति **कर्मिभ्यो**ऽग्निहोत्रादि कर्म तद्वद्भ्यो**ऽधिको योगी** विशिष्टो यस्मा**त्तस्माद्योगी भवार्जुन**॥४६॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥४७॥

आदितः श्लो. २८०

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगोनाम षष्ठोऽध्यायः॥६॥

रुद्रादित्यादि ध्यानपरायण सभी योगियों में से जो मुझ वासुदेव में समाहित-चित्त हो श्रद्धालु भक्त मेरी सेवा करता है वह मुझे श्रेष्ठ योगी मान्य है॥४७॥

*इस प्रकार श्रीमद्भगवद्गीता की श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी द्वारा रचित आत्मसंयमयोग नामक षष्ठ अध्याय की मिताक्षरा व्याख्या सम्पूर्ण हुई॥६॥*

योगिनामिति। **योगिनामपि सर्वेषां** रुद्रादित्यादिध्यान-पराणां मध्ये **मद्गतेन** मयि वासुदेवे समाहितेना**न्तरात्मना**ऽ-न्तःकरणेन **श्रद्धावा**ञ्श्रद्दधानः **सन्भजते** सेवते **यो मां स मे** मम **युक्ततमो**ऽतिशयेन युक्तो **मतो**ऽभिप्रेत इति॥४७॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपाद-शिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये आत्मसंयमयोगो नाम षष्ठोऽध्यायः॥६॥*

**षष्ठाह्निकम्॥६॥**

*॥इति प्रथमं षट्कम्॥*

ॐ

# श्रीमद्भगवद्गीता

## द्वितीयषट्कम्

# अथ सप्तमोऽध्यायः

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः (गी. ६.४७)

इति प्रश्नबीजमुपन्यस्य स्वयमेवेदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुः—

**श्रीभगवानुवाच—**

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु॥१॥**

(भगवत् तत्त्व किस प्रकार का है? और मद्गत अन्तरात्मा पुरुष कैसा होता है? ऐसे दो प्रश्न अर्जुन के मन में उत्पन्न जान उसके पूछने से पहले ही भगवान् श्रीकृष्ण बोल उठे कि) हे पार्थ! मुझ परमेश्वर में जिसका मन आसक्त है एवं मेरा आश्रय लेकर मन का समाधान करना चाहता है वैसा तू निःसन्देह जिस प्रकार मेरे समग्र रूप को जान सकोगे, उस प्रकार को मुझसे सुन॥१॥

मयि वक्ष्यमाणविशेषणे परमेश्वर आसक्तं मनो यस्य स **मय्यासक्तमना** हे **पार्थ योगं युञ्जन्**मनःसमाधानं कुर्वन्**मदाश्रयो**ऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयो यो हि कश्चित्पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यतेऽयं तु योगी मामेवाऽऽश्रयं प्रतिपद्यते हित्वाऽन्यत्साधनान्तरं मय्येवाऽ-

ऽसक्तमना भवति। यस्त्वमेवंभूतः **सन्नसंशयं समग्रं** समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं **मां यथा** येन प्रकारेण **ज्ञास्यसि** संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया॥१॥

तच्च मद्विषयम्—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते॥२॥

वह अपरोक्ष ज्ञान मद्विषयक है, शास्त्र एवं अनुभव से सिद्ध है, उसी को मैं तेरे लिए निःशेषरूप से कहूँगा जिसे जानने के बाद इस लोक में अन्य ज्ञातव्य कुछ भी शेष नहीं रह जायेगा॥२॥ श्रोत्रियं ब्रह्मनिष्ठम्

**ज्ञानं ते** तुभ्य**महं सविज्ञानं** विज्ञानसहितं स्वानुभवसंयुक्त**मिदं वक्ष्यामि** कथयिष्याम्य**शेषतः** कात्स्न्र्येन। तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय। **यज्ज्ञात्वा** यज्ज्ञानं ज्ञात्वा **नेह भूयः** पुन**र्ज्ञातव्यं** पुरुषार्थसाधनम**वशिष्यते** नावशेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः। अतो विशिष्टफलत्वाद्दुर्लभं ज्ञानम्॥२॥

कथमित्युच्यते—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥३॥

(उक्त ज्ञान के दुर्लभत्व को कहते हैं कि) हजारों मनुष्यों में कोई सिद्धि के लिए यत्न करता है और उन यत्न करने वाले सिद्धों में भी कोई विरला ही मुझे तत्त्व से जानता है॥३॥

**मनुष्याणां** मध्ये **सहस्रेष्व**नेकेषु **कश्चिद्यतति** प्रयत्नं करोति **सिद्धये** सिद्ध्यर्थं, तेषां **यततामपि सिद्धानां** सिद्धा एव हि ते ये मोक्षाय यतन्ते/ तेषां **कश्चिदेव मां वेत्ति तत्त्वतो** यथावत्॥३॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याऽऽह—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥४॥**

(समग्र रूप से ज्ञान की प्रशंसा कर श्रोता को अभिमुख करने के बाद भगवान् ने कहा कि) पृथ्वी तन्मात्रा, जल, अग्नि, वायु और आकाश तन्मात्रा, मन का कारण अहंकार, बुद्धि का कारण महत्तत्व और सम्पूर्ण प्रवृत्तियों के बीजभूत अहंकार—यह मेरी अष्टधा प्रकृति है॥४॥

**भूमि**रिति पृथिवीतन्मात्रमुच्यते न स्थूला 'भिन्ना प्रकृति-रष्टधा' इति वचनात्। तथाऽबादयोऽपि तन्मात्राण्येवोच्यन्ते। **आपोऽनलो वायुः खं मन** इति मनसः कारणमहंकारो गृह्यते। **बुद्धि**रित्यहंकारकारणं महत्तत्त्वम्। **अहंकार** इत्यविद्या-संयुक्तमव्यक्तम्। यथा विषसंयुक्तमन्नं विषमुच्यत एवमहंकार-वासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते प्रवर्तकत्वा-दहंकारस्य। अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके। **इतीयं** यथोक्ता **प्रकृतिर्मे** ममैश्वरी मायाशक्तिर**ष्टधा भिन्ना** भेदमागता॥४॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत्॥५॥**

यह तो मेरी अपरा प्रकृति (अर्थात् यह निकृष्ट अशुद्ध अनर्थकारी, संसारबन्धनात्मिका) है। इससे विलक्षण, विशुद्ध, मेरी आत्मभूता, क्षेत्रस्वरूपा जीव को परा प्रकृति जानो जो प्राणधारण की निमित्तभूता है, हे महाबाहो! जिस अन्तःप्रविष्ट प्रकृति से यह जगत् धारण किया जाता है॥५॥

अपरेति। **अपरा** न परा निकृष्टाऽशुद्धाऽनर्थकरी संसार-बन्धनात्मिके**यमितो**ऽस्या यथोक्ताया**स्त्वन्यां** विशुद्धां

हमारे अहंकार

भगवान का मेरी माया कहने का अर्थ है कि बिना हमारे यह रह नहीं सकती स्वतन्त्र इनका अस्तित्व नहीं है। बिना भगवान के यह है ही नहीं है।

**प्रकृतिं** ममाऽऽत्मभूतां **विद्धि मे परां** प्रकृष्टां **जीवभूतां** क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे **महाबाहो यया** **प्रकृत्येदं धार्यते जगदन्तः**प्रविष्टया॥५॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥६॥**

परा–अपरा, क्षेत्रक्षेत्रज्ञ स्वरूपा ये दोनों प्रकृति जिन की योनि है, ऐसे ये सभी भूत हैं; इस प्रकार समझो। (जब मेरी प्रकृति सभी भूतों की उत्पत्ति का कारण है, तब) मैं सम्पूर्ण जगत् का प्रभव और प्रलय हूँ (अर्थात् इन दोनों प्रकृतियों द्वारा मैं सर्वज्ञ ईश्वर जगत् का कारण हूँ)॥६॥

एतदिति। **एतद्योनीन्ये**ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्येषां भूतानां तान्येतद्योनीनि **भूतानि सर्वाणीत्ये-वमुपधारय** जानीहि। यस्मान्मम प्रकृती योनिः कारणं सर्वभूतानामतो**ऽहं कृत्स्नस्य** समस्तस्य **जगतः प्रभव** उत्पत्तिः **प्रलयो** विनाश**स्तथा** प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः॥६॥

यतस्तस्मात्—

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥७॥**

(जब ऐसा है इसीलिए) हे धनंजय! मुझसे श्रेष्ठ एवं अन्य कुछ भी नहीं है। जैसे धागे में मणियाँ पिरोयी हुई होती हैं ऐसे ही मुझमें यह सम्पूर्ण जगत् ओत-प्रोत है॥७॥

**मत्तः** परमेश्वरात्**परतरमन्यत्**कारणान्तरं **किंचिन्नास्ति** न विद्यतेऽहमेव जगत्कारणमित्यर्थः। हे **धनंजय!** यस्मादेवं तस्मा**न्मयि** परमेश्वरे सर्वाणि भूतानि **सर्वमिदं** जग-

त्प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः। दीर्घतन्तुषु पट-वत्सूत्रे च **मणिगणा इव**॥७॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु॥८॥

हे कौन्तेय! जल में मैं रस हूँ, चन्द्र-सूर्य में मैं प्रभा हूँ, सम्पूर्ण वेदों में मैं प्रणव, आकाश में शब्द और मनुष्यों में मैं पौरुष हूँ॥८॥

**रसोऽहमपां** यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः। एवं सर्वत्र। यथाऽहमप्सु रस एवं **प्रभाऽस्मि शशिसूर्ययोः**। **प्रणव** ओंकारः **सर्ववेदेषु** तस्मिन्प्रणवभूते मयि सर्वे वेदाः प्रोताः। तथा **खं** आकाशे **शब्दः** सारभूतस्तस्मिन्मयि खं प्रोतम्। तथा **पौरुषं** पुरुषस्य भावो यतः पुंबुद्धिर्नृषु तस्मिन्मयि पुरुषाः प्रोताः॥८॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥९॥

(मुझमें सम्पूर्ण जगत् ओत-प्रोत है, इसी का वर्णन प्रकारान्तर से करते हैं।) पृथ्वी में सुरभि गन्ध मैं हूँ, अग्नि में दीप्ति रूप तेज मैं हूँ तथा सभी भूतों में जीवन मैं हूँ। वैसे ही, तपस्वियों में तप मैं हूँ॥९॥

पुण्य इति। **पुण्यः** सुरभिर्**गन्धः पृथिव्यां** चाहं तस्मिन्मयि गन्धभूते पृथिवी प्रोता। पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम्। अपुण्यत्वं तु गन्धादीनामविद्याऽधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति। **तेजो** दीप्तिश्**चास्मि विभावसावग्नौ**। तथा **जीवनं सर्वभूतेषु** येनान्नरसेन जीवन्ति

सर्वाणि भूतानि तज्जीवनम्। **तपश्चास्मि तपस्विषु** तस्मिंस्तपति मयि तपस्विनः प्रोताः॥९॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्॥१०॥**

हे पृथापुत्र अर्जुन! सभी भूतों में प्ररोहकारण सनातन बीज मुझे ही जानो। विवेकशक्तियुक्त बुद्धिमान् पुरुषों में अन्तःकरण की विवेक-शक्तिरूपा बुद्धि मैं हूँ और तेजस्वियों का तेज मैं हूँ॥१०॥

बीजमिति। **बीजं** प्ररोहकारणं **मां विद्धि सर्वभूतानां** हे **पार्थ सनातनं** चिरंतनम्। किंच **बुद्धि**र्विवेकशक्तिरन्तःकरणस्य **बुद्धिमतां** विवेकशक्तिमताम**स्मि तेजः** प्रागल्भ्यं तद्वतां **तेजस्विनामहम्**॥१०॥

**बलं बलवतां चाहं कामरागविवर्जितम्।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥११॥**

अप्राप्त विषयों में जो तृष्णा होती है, उसे काम कहते हैं और प्राप्त विषयों में जो रञ्जना होती है, उसे राग कहते हैं। इन दोनों से रहित देहादि धारणमात्र के लिये जो सामर्थ्य, वह बलवानों का बल मैं हूँ। शास्त्र के तात्पर्य रूप धर्म से अविरुद्ध जो सभी प्राणियों में काम है, वह काम मैं हूँ॥११॥

बलमिति। **बलं** सामर्थ्यमोजो **बलवतामहम्**। तच्च बलं **कामरागविवर्जितं** कामश्च रागश्च कामरागौ कामस्तृष्णाऽसंनिकृष्टेषु विषयेषु रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां विवर्जितं देहादिधारणमात्रार्थं बलमहमस्मि न तु यत्संसारिणां तृष्णारागकारणम्। किंच **धर्माविरुद्धो** धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु **भूतेषु कामो** यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः **कामोऽस्मि** हे **भरतर्षभ**॥११॥

किंच—

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि॥१२॥**

जो भी सत्त्वगुण से सात्त्विक, रजोगुण से राजस और तमोगुण से तामस पदार्थ बनते हैं तथा जो पदार्थ प्राणियों के कर्मवशात् उत्पन्न होते हैं; उन सभी को मुझसे उत्पन्न हुआ जानो। (यद्यपि वे पदार्थ मुझसे उत्पन्न होते हैं फिर भी) मैं उनके अधीन नहीं हूँ॥१२॥

**ये चैव सात्त्विकाः** सत्त्वनिर्वृत्ता **भावाः** पदार्था **राजसा** रजोनिर्वृत्तास्**तामसा**स्तमोनिर्वृत्ताश्च **ये** केचित्प्राणिनां स्वकर्मवशाज्जायन्ते भावास्**तान्मत्त एव** जायमानानित्येवं **विद्धि** सर्वान्समस्तानेव। यद्यपि ते मत्तो जायन्ते तथाऽपि **न त्वहं तेषु** तदधीनस्तद्वशो यथा संसारिणस्**ते** पुनर्**मयि** मद्वशा मदधीनाः॥१२॥

एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान्। तच्च किंनिमित्तं जगतोऽज्ञानमित्युच्यते—

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥१३॥**

(गुण के विकार राग-द्वेष, मोहादि प्रापक) इन त्रिगुणात्मक यथोक्त पदार्थों से यह सम्पूर्ण प्राणीसमुदायरूप जगत् अविवेकता को प्राप्त कर रहा है; इसीलिये उन यथोक्त गुणों से परे, विलक्षण, जन्मादि सम्पूर्ण भावविकारों से रहित मुझ अविनाशी को जानता नहीं है॥१३॥

**त्रिभिर्गुणमयैर्**गुणविकारै रागद्वेषमोहादिप्रकारैर्**भावैः**

पदार्थैरेभिर्यथोक्तैः **सर्वमिदं** प्राणिजातं **जगन्मोहितम**-विवेकतामापादितं **सन्नाभिजानाति मामेभ्यो** यथोक्तेभ्यो गुणेभ्यः **परं** व्यतिरिक्तं विलक्षणं **चाव्ययं** व्ययरहितं जन्मादिसर्वभावविकारवर्जितमित्यर्थः ॥१३॥

**कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते—**

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥१४॥**

यह मुझ परमेश्वर की माया दैवी है, गुणमयी है, इसका अतिक्रमण अत्यन्त कठिनाई से हो सकता है। ऐसी दुरत्यया, गुणमयी यथोक्त माया को वे पार कर सकते हैं, जो (सम्पूर्ण धर्मों का परित्याग कर मुझ मायावी को ही अपना स्वरूप मानकर) सभी प्रकार से शरणापन्न हो जाते हैं ॥१४॥

**दैवी** देवस्य ममेश्वरस्य विष्णोः स्वभूता **हि** यस्मा**देषा** यथोक्ता **गुणमयी मम माया दुरत्यया** दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया। तत्रैवं सति सर्वधर्मान्परित्यज्य **मामेव** मायाविनं स्वात्मभूतं सर्वात्मना **ये प्रपद्यन्ते ते मायामेतां** सर्वभूतमोहिनीं **तरन्त्यतिक्रामन्ति** संसारबन्धनान्मुच्यन्त इत्यर्थः ॥१४॥

**यदि त्वां प्रपन्ना मायामेतां तरन्ति, कस्मात्त्वामेव सर्वे न प्रपद्यन्त इत्युच्यते—**

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः॥१५॥**

माया से जिनका ज्ञान अपहृत हो गया है, जो (हिंसा, मिथ्याभाषण

चिन्त के दुःख को स्वीकार करने पर उस दुःख का प्रतिकार हो जाता है
धर्मानुष्ठान पश्चात पवित्रोहम् का भाव उत्पन्न होता है



आदि) आसुरभाव का आश्रय लिए बैठे हैं, ऐसे मनुष्यों में निकृष्ट, मूढ़, दुष्कर्मी मुझ परमेश्वर की अनन्यशरण नहीं होते॥१५॥

**न मां परमेश्वरं दुष्कृतिनः** पापकारिणो **मूढाः प्रपद्यन्ते नराधमा** नराणां मध्येऽधमा निकृष्टास्ते च **माययाऽपहृतज्ञानाः** संमुषितज्ञाना **आसुरं भावं** हिंसानृतादिलक्षण**माश्रिताः** ॥१५॥

ये पुनर्नरोत्तमाः पुण्यकर्माणः—

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥१६॥**

(किन्तु जो मनुष्यों में उत्तम हैं, पुण्य कर्म करने वाले हैं) हे अर्जुन! ऐसे प्राणी चार प्रकार के हैं-एक आर्त, दूसरा अर्थार्थी, तीसरा जिज्ञासु और चौथा ज्ञानी। हे भरतवंश में श्रेष्ठ अर्जुन! यही चतुर्विध पुण्यात्मा पुरुष मेरा भजन करते हैं॥१६॥

**चतुर्विधा**श्चतुष्प्रकारा **भजन्ते** सेवन्ते **मां जनाः सुकृतिनः** पुण्यकर्माणो हे **अर्जुन**! **आर्त** आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाऽभिभूत आपन्नो **जिज्ञासु**र्भगवत्तत्त्वं ज्ञातुमिच्छति यो**ऽर्थार्थी** धनकामो **ज्ञानी** विष्णोस्तत्त्वविच्च हे **भरतर्षभ**॥१६॥

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥१७॥**

इन चार प्रकार के भक्तों में ज्ञानी तत्त्ववित् होने के कारण नित्ययुक्त कहा जाता है; यह एक भक्ति है अर्थात् परमेश्वर से अभिन्नरूप अपने को समझकर सदा परमेश्वर का भजन करता है, अतः विशिष्ट है। उस ज्ञानी की मैं आत्मा हूँ इसलिए मैं उसे प्रिय हूँ और वह ज्ञानी मेरी आत्मा होने के कारण मुझे अत्यन्त प्रिय है॥१७॥

तेषामिति। **तेषां चतुर्णां मध्ये ज्ञानी** तत्त्ववित्तत्त्ववित्त्वा**न्नित्ययुक्तो** भवत्येकभक्तिश्चान्यस्य भजनीयस्यादर्शनादतः स **एकभक्तिर्विशिष्यते** विशेषमाधिक्यमापद्यतेऽतिरिच्यत इत्यर्थः। **प्रियो हि** यस्मादहमात्मा **ज्ञानिनो**ऽतस्तस्या**हमत्यर्थं** प्रियः। प्रसिद्धं हि लोक आत्मा प्रियो भवतीति। तस्माज्ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः। **स च** ज्ञानी **मम** वासुदेवस्याऽऽत्मैवेति ममात्यर्थं **प्रियः** ॥१७॥

न तर्ह्यार्तादयस्त्रयो वासुदेवस्य प्रियाः। न, किं तर्हि—

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥१८॥

ये सभी तीनों भक्त भी उदार हैं इसीलिए मुझे प्रिय हैं ही, किन्तु ज्ञानी मुझे अत्यन्त प्रिय है, क्योंकि वह मेरी आत्मा ही है— इस प्रकार आस्था में प्रवृत्त हुआ वह समाहितचित पुरुष मुझ परब्रह्म को ही सर्वोत्तम गन्तव्य मानकर उस ओर चल रहा है॥१८॥

**उदारा** उत्कृष्टाः **सर्व एवैते** त्रयोऽपि मम प्रिया एवेत्यर्थः। न हि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवति ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः। तत्कस्मादित्याह **ज्ञानी त्वात्मैव** नान्यो मत्त इति **मे** मम **मतं** निश्चयः। **आस्थित** आरोढुं प्रवृत्तः **स** ज्ञानी **हि** यस्मादहमेव भगवान्वासुदेवो नान्योऽस्मीत्येवं **युक्तात्मा** समाहितचित्तः सन्**मामेव** परं ब्रह्म गन्तव्य**मनुत्तमां गतिं** गन्तुं प्रवृत्त इत्यर्थः॥१८॥

ज्ञानी पुनरपि स्तूयते—

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥१९॥

अनेक जन्मों में से अन्तिम जन्म में प्राप्त परिपाक ज्ञान वाला ज्ञानी मुझ वासुदेव का (अन्तरात्मरूप में अपरोक्षरूप से) भजन करता है क्योंकि उसकी दृष्टि में सब कुछ वासुदेव ही तो है। (जो इस प्रकार मुझ सर्वात्मा को भजता है), वह महात्मा अत्यन्त दुर्लभ है॥१९॥

**बहूनां जन्मनां** ज्ञानार्थसंस्काराश्रयाणामन्ते समाप्तौ **ज्ञानवान्**प्राप्तपरिपाकज्ञानो **मां** वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः **प्रपद्यते**। कथं, **वासुदेवः सर्वमिति**। य एवं सर्वात्मानं मां प्रपद्यते **स महात्मा** न तत्समोऽन्योऽस्त्यधिको वा। अतः **सुदुर्लभो** मनुष्याणां सहस्रेष्वित्युक्तम्॥१९॥

आत्मैव सर्वं वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया॥२०॥**

(पुत्र-पशु-स्वर्गादिविषयक) उन-उन कामनाओं से जिनका विवेक-विज्ञान अपहृत हो गया है ऐसे लोग परमेश्वर से भिन्न देवताओं को मानकर देवभक्ति करते हैं फलतः वे अन्य देवताओं को प्राप्त करते हैं। देवाराधन के लिए प्रसिद्ध जो भी नियम हैं उन नियमों का आश्रय लेकर तथा जन्मान्तर में उपार्जित संस्कारविशेषरूप स्वभाव के कारण आत्मीय प्रकृति से वे नियन्त्रित होते है (इसीलिए परमेश्वर से भिन्न देवताओं की भक्ति करते हैं)॥२०॥

**कामैस्तैस्तैः** पुत्रपशुस्वर्गादिविषयै**र्हृतज्ञाना** अपहृतविवेकविज्ञानाः **प्रपद्यन्तेऽन्यदेवताः** प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवतास्**तं तं नियमं** देवताराधने प्रसिद्धो यो यो नियमस्तं त**मास्थाया**ऽऽश्रित्य **प्रकृत्या** स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण **नियता** नियमिताः **स्वया**ऽऽत्मीयया॥२०॥

तेषां च कामिनाम्—

**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥२१॥**

(उन कर्मियों में से जो) सकाम भक्त श्रद्धा से युक्त हो जिस-जिस देवस्वरूप को पूजना चाहता है मैं उन-उन सकाम भक्तों की श्रद्धा को उसी देव में स्थिर कर देता हूँ (जिससे वे स्वभावतः पूर्व की भाँति देवपूजा में प्रवृत्त होते हैं)॥२१॥

**यो यः** कामी **यां यां** देवता**तनुं श्रद्धया** संयुक्तो **भक्तश्च** सन्न**र्चितुं** पूजयितु**मिच्छति तस्य तस्य** कामिनो**ऽचलां** स्थिरां **श्रद्धां तामेव विदधामि** स्थिरीकरोमि ययैव पूर्वं प्रवृत्तः स्वभावतः॥२१॥

यो यां देवतातनुं श्रद्धयाऽर्चितुमिच्छतीति—

**स तया श्रद्धया युक्तस्तस्या राधनमीहते।**
**लभते च ततः कामान्मयैव विहितान्हि तान्॥२२॥**

मेरे द्वारा विहित श्रद्धा से युक्त हो देवता के उस स्वरूप की आराधना वह करना चाहता है। फलतः उस आराधित देवस्वरूप से ही अभीष्ट कामनाओं को प्राप्त करता है जो मुझ सर्वकर्म-फलविभागज्ञ सर्वज्ञ परमेश्वर से ही निर्मित होते हैं॥२२॥

स तयेति। **स तया** मद्विहितया **श्रद्धया युक्तः** सं**स्तस्या** देवतातन्वा **राधन**माराधन**मीहते** चेष्टते। **लभते च ततः**स्तस्या आराधिताया देवतातन्वाः **कामा**नीप्सिता**न्मयैव** परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया **विहिता**न्निर्मितांस्**तान्हि** यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभत इत्यर्थः। हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यं, न हि कामा हिताः कस्यचित्, यस्मादन्तवत्साधनव्यापाराः॥२२॥

अविवेकिनः कामिनश्च तेऽतः—

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि॥२३॥

उन अल्पबुद्धि देवभक्तों को विनाशीफल प्राप्त होता है। देवपूजक देवताओं को प्राप्त करते हैं और मेरे भक्त मुझे भी प्राप्त कर लेते हैं॥२३॥

**अन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानां देवान्देवयजो यान्ति** देवान्यजन्तीति देवयजस्ते देवान्यान्ति। **मद्भक्ता यान्ति मामपि**। एवं समानेऽप्यायासे मामेव न प्रपद्यन्तेऽनन्तफलायाहो खलु कष्टं वर्तत इत्यनुक्रोशं दर्शयति भगवान्॥२३॥

किंनिमित्तं त्वामेव न प्रपद्यन्त इत्युच्यते—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम्॥२४॥

मैं वस्तुतः अव्यक्त हूँ। सबका प्रकाशक हूँ, प्रकाश्य नहीं हूँ फिर भी मेरे अविनाशी सर्वोत्तम परमात्मस्वरूप परमभाव को ये अविवेकी लोग जानते नहीं हैं, इसीलिए मुझ अव्यक्त को इस समय व्यक्तिभावापन्न मानते हैं॥२४॥

**अव्यक्तमप्रकाशं व्यक्तिमापन्नं** प्रकाशं गतमिदानीं **मन्यन्ते मां** नित्यप्रसिद्धमीश्वरमपि सन्त**मबुद्धयो**ऽविवेकिनः **परं भावं** परमात्मस्वरूप**मजानन्तो**ऽविवेकिनो **ममाव्ययं** व्ययरहित**मनुत्तमं** निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः॥२४॥

तदीयमज्ञानं किंनिमित्तमित्युच्यते—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम्॥२५॥

(मैं अपने किसी-किसी भक्त के सामने ही प्रकाशित होता हूँ,) सर्वसाधारण के सामने नहीं। गुणों की युक्ति को योगमाया कहते हैं और उस योगमाया से मैं आवृत रहता हूँ इसीलिए यह मूढ़ लोक मुझे अजन्मा और अव्ययरूप से नहीं जानता॥२४॥

**नाहं प्रकाशः सर्वस्य** लोकस्य केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः। **योगमायासमावृतो** योगो गुणानां युक्तिर्घटनं सैव माया योगमाया तया योगमायया समावृतः संच्छन्न इत्यर्थः। अत एव **मूढो लोकोऽयं नाभिजानाति मामजमव्ययम्**॥२५॥

यया योगमायया समावृतं मां लोको नाभिजानाति, नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति, यथाऽन्यस्यापि मायाविनो माया ज्ञानं तद्वद्यत एवमतः—

**वेदाहं समतीतानि वर्तमानानि चार्जुन।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन॥२६॥**

हे अर्जुन! मैं सभी अतीत, वर्तमान एवं भविष्य में होने वाले भूतों को जानता हूँ, (किन्तु एकमात्र मेरे शरणापन्न भक्त को छोड़कर अन्य) कोई भी मुझे नहीं जानता है॥२६॥

**अहं तु वेद** जाने **समतीतानि** समतिक्रान्तानि भूतानि **वर्तमानानि चार्जुन भविष्याणि च भूतानि वेदाहं मां वेद तु न कश्चन** मद्भक्तं मच्छरणमेकं मुक्त्वा मत्तत्त्ववेदना-भावादेव न मां भजते॥२६॥

केन पुनस्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमा-नानि सर्वभूतानि त्वां न विदन्तीत्यपेक्षायामिदमाह—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप॥२७॥**

हे भारत। उस इच्छा-द्वेष से उत्पन्न द्वन्द्व-मोह के कारण उत्पत्तिकाल में ही सभी जीव सम्मोहित होते रहते हैं। हे परंतप! सभी प्राणी मोह के वशीभूत हुए ही उत्पन्न होते हैं॥२७॥

**इच्छाद्वेषसमुत्थेन**च्छा च द्वेषश्चेच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन। केनेति विशेषापेक्षायामिदमाह **द्वंद्वमोहेन** द्वंद्वनिमित्तो मोहो द्वंद्वमोहस्तावेवेच्छाद्वेषौ शीतोष्णवत्परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वंद्वशब्देनाभिधीयेते। तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः। न हीच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि, किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इति। अतस्तेनेच्छाद्वेषसमुत्थेन द्वंद्वमोहेन **भारत** भरतान्वयज **सर्वभूतानि** संमोहितानि सन्ति **संमोहं** संमूढतां **सर्गे** जन्मन्युत्पत्तिकाल इत्येतद्**यान्ति** गच्छन्ति हे **परंतप**। मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः। यत एवमतस्तेन द्वंद्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्त्यत एवाऽऽत्मभावेन मां न भजन्ते॥२७॥

के पुनरनेन द्वंद्वमोहेन निर्मुक्ताः सन्तस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते—

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥२८॥**

जिन पुण्यकर्मा मनुष्यों के पाप का अन्त हो गया है वे द्वन्द्वमोह से मुक्त हुए दृढ़व्रती मेरा भजन करते हैं॥२८॥

**येषां तु पुनरन्तगतं** समाप्तप्रायं क्षीणं **पापं जनानां पुण्यकर्मणां** पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां **ते द्वंद्वमोहनिर्मुक्ता** यथोक्तेन द्वंद्वमोहेन निर्मुक्ता **भजन्ते मां** परमात्मानं **दृढव्रता** एवमेव परमार्थतत्त्वं नान्यथेत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञाना दृढव्रता उच्यन्ते॥२८॥

ते किमर्थं भजन्त इत्युच्यते—

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥२९॥**

जो जरा एवं मरण से मुक्त होने के लिए मेरा आश्रय लेकर समाहितचित हो यत्न करते हैं, वे सम्पूर्ण अध्यात्म एवं कर्म के सहित ब्रह्म को जानते हैं॥२९॥

**जरामरणमोक्षाय** जरामरणमोक्षार्थं **मां** परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो **यतन्ति** प्रयतन्ते **ये ते** यद्ब्रह्म परं **तद्विदुः कृत्स्नं** समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः **कर्म चाखिलं** समस्तं विदुः॥२९॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥३०॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥७॥*

जो अधिभूत, अधिदैव और अधियज्ञ के सहित मुझे जानते हैं, वे समाहितचित्त पुरुष मरणकाल में भी मुझे जानेंगे ही॥३०॥

*इस प्रकार श्रीमद्भगवद्गीता की श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी द्वारा ज्ञानविज्ञानयोगनामक सप्तम अध्याय की मिताक्षरा व्याख्या सम्पूर्ण हुई॥७॥*

साधीति। **साधिभूताधिदैवमधिभूतं** चाधिदैवं चाधिभूताधिदैवं सहाधिभूताधिदैवेन साधिभूताधिदैवं च **मां ये** विदुः **साधियज्ञं च** सहाधियज्ञेन साधियज्ञं **ये विदुः प्रयाणकालेऽपि च** मरणकालेऽपि च **मां ते विदुर्युक्तचेतसः** समाहितचित्ता इति॥३०॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः॥७॥*

ॐ

# श्रीमद्भगवद्गीता

## अथाष्टमोऽध्याय:

'ते ब्रह्म तद्विदुः कृत्स्नम्' ( गी. ७.२९ ) इत्यादिना भगवता- ऽर्जुनस्य प्रश्नबीजान्युपदिष्टान्यतस्तत्प्रश्नार्थम्—

**अर्जुन उवाच—**

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते॥ १ ॥**

अर्जुन ने पूछा— वह ब्रह्म क्या है? अध्यात्म क्या है? हे पुरुषोत्तम! कर्म क्या है? अधिभूत किसे कहा है और अधिदैव शब्द से क्या कहा जाता है॥१॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः॥ २ ॥**

हे मधुसूदन! इस देह में अधियज्ञ क्या पदार्थ है और वह कैसे रहता है? प्रयाणकाल में समाहितचित्त पुरुषों के द्वारा किस प्रकार से आप जाने जाते हैं॥२॥

एषां प्रश्नानां यथाक्रमं निर्णयाय—

**श्रीभगवानुवाच—**

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः॥ ३ ॥**

निरुपाधिक ब्रह्म को अक्षर कहते हैं। (उसी परब्रह्म का प्रत्येक

शरीर में जो प्रत्यग् रूप से वास है, उसे स्वभाव कहते हैं और यह) स्वभाव ही अध्यात्म पद का अर्थ है। (पञ्चभूतों को भी भूत कहते हैं और उनसे बने हुए स्थूल-सूक्ष्म शरीर एवं ब्रह्माण्ड को भी भूत कहते हैं) भूतों के भाव को उत्पन्न करने वाला जो देवता के उद्देश्य से पुरोडाश आदि द्रव्य का परित्याग होता है, वह विसर्गरूप कर्म यज्ञ शब्द से कहा गया है और इसी बीजभूत यज्ञ रूपी कर्म को कर्म नाम से कहा गया है। पर (जीवात्मा को अधोगति संसार से उठाकर परमेश्वर की ओर ऊर्ध्वमुख करने वाला भगवदर्पणबुद्धि से किया गया) जो शास्त्रविहित निष्काम कर्म है, उसे भी विसर्ग कहते हैं और ऐसे विसर्ग का नाम ही कर्म है (कर्म का यही अर्थ यहाँ लेना चाहिये)॥३॥

**अक्षरं** न क्षरतीति पर आत्मा ''एतस्य वा अक्षरस्य प्रशासने गार्गि'' ( बृ. ३.८.९ ) इति श्रुतेः। ओंकारस्य च 'ओमित्येकाक्षरं ब्रह्म' ( गी. ८.१३ ) इति परेण विशेषणादग्रहणम्। **परममिति** च निरतिशये ब्रह्मण्यक्षर उपपन्नतरं विशेषणम्। तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभाव इति स्वो भावोऽध्यात्ममुच्यते, आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु **स्वभावोऽध्यात्ममुच्यते**ऽध्यात्मशब्देनाभिधीयते। **भूतभावोद्भवकरो** भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः। **विसर्गो** विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः स एष विसर्गलक्षणो यज्ञः **कर्मसंज्ञितः** कर्मशब्दित इत्येतत्। एतस्माद्धि बीजभूताद्वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति॥३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर॥४॥

नाशवान् पदार्थ अधिभूत है, हिरण्यगर्भ पुरुष अधिदैवत है और हे देहधारियों में श्रेष्ठ अर्जुन! इस देह में अधियज्ञ तो मैं ही हूँ॥४॥

अधिभूतमिति। **अधिभूतं** प्राणिजातमधिकृत्य भवतीति। कोऽसौ **क्षरः** क्षरतीति क्षरो विनाशी **भावो** यत्किंचिज्जनिमद्वस्त्वित्यर्थः। **पुरुषः** पूर्णमनेन सर्वमिति पुरि शयनाद्वा पुरुष आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः **सोऽधिदैवतम्**। **अधियज्ञः** सर्वयज्ञाभिमानिनी देवता विष्णवाख्या। "यज्ञो वै विष्णुः" (तै. सं. १.७.४) इति श्रुतेः। स हि विष्णु**रहमेवात्रास्मिन्देहे** यो यज्ञस्तस्याहमधियज्ञो, यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति **देहभृतां वर**॥४॥

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥ ५ ॥**

मरणकाल में केवल मुझ परमेश्वर का स्मरण करता हुआ शरीर छोड़कर जो जाता है वह मेरे वैष्णव तत्त्व को प्राप्त करता है। इस विषय में (परमेश्वर को प्राप्त करता है या नहीं करता है ऐसा) संशय नहीं करना चाहिए॥५॥

अन्तकाल इति। **अन्तकाले च** मरणकाले **मामेव** परमेश्वरं विष्णुं **स्मरन्मुक्त्वा** परित्यज्य **कलेवरं** शरीरं **यः प्रयाति** गच्छति **स मद्भावं** वैष्णवं तत्त्वं **याति**। **नास्ति** न विद्यतेऽस्मिन्नर्थे **संशयो** याति वा न वेति॥५॥

न मद्विषय एवायं नियमः, किं तर्हि—

**यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ ६ ॥**

जिस-जिस पदार्थ का अन्तकाल में स्मरण करता हुआ शरीर छोड़ता है, हे अर्जुन! सदा उस भाव से भावित पुरुष उस-उस भाव को ही प्राप्त कर लेता है॥६॥

**यं यं वाऽपि यं यं भावं देवताविशेषं स्मरंश्चिन्तयं-स्त्यजति परित्यजत्यन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय सदा सर्वदा तद्भावभावितस्तस्मिन्भावस्तद्भावः स भावितः स्मर्यमाण-तयाऽभ्यस्तो येन स तद्भावभावितः सन्॥६॥**

**यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणम्—**

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥**

(जब देहान्तरप्राप्ति में इस प्रकार अन्त्यस्मृति ही कारण है) तो तू सभी समय मेरा स्मरण कर और युद्ध भी कर। इस प्रकार मुझ वासुदेव में (जिसकी मन-बुद्धि समर्पित है वह तू मुझमें अर्पित किये हुए) मन-बुद्धि वाला होकर निःसन्देह मुझे ही (अर्थात् मेरे यथास्मृत स्वरूप को ही) प्राप्त करोगे॥७॥

**तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युद्धं च स्वधर्मं कुरु। मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन्मामेव यथास्मृत-मेष्यस्यागमिष्यस्यसंशयो न संशयोऽत्र विद्यते॥७॥**

**किंच—**

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्॥८॥**

हे पार्थ! अभ्यासयोग से युक्त एवं अनन्यगामी चित्त से परम दिव्यपुरुष का चिन्तन करने वाला उसी को प्राप्त कर लेता है॥८॥

**अभ्यासयोगयुक्तेन** मयि चित्तसमर्पणविषयभूत एकस्मिंस्तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन **चेतसा नान्यगामिना** नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन **नान्यगामिना परमं** निरतिशयं **पुरुषं दिव्यं** दिवि सूर्यमण्डले भवं **याति** गच्छति हे **पार्थ, अनुचिन्तयञ्**शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥ ८ ॥

किंविशिष्टं च पुरुषं यातीत्युच्यते—

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

क्रान्तदर्शी, चिरंतन, सम्पूर्ण जगत् का अनुशासक, सूक्ष्मातिसूक्ष्म, सभी के कर्मफल का विधायक, अज्ञानान्धकार से अत्यन्त अस्पृष्ट, आदित्य के समान नित्यप्रकाशस्वरूप एवं अचिन्त्यरूप परमेश्वर का जो स्मरण करता है, (वह पूर्वश्लोकोक्त परम दिव्यपुरुष को प्राप्त करता है) ॥ ९ ॥

**कविं** क्रान्तदर्शिनं सर्वज्ञं **पुराणं** चिरंतन**मनुशासितारं** सर्वस्य जगतः प्रशासितार**मणोः** सूक्ष्मादप्य**णीयांसं** सूक्ष्मतर**मनुस्मरेद**नुचिन्तयेद्**यः** कश्चित्**सर्वस्य** कर्मफलजातस्य **धातारं** विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातार**मचिन्त्यरूपं** नास्य रूपं नियतं विद्यमानमपि केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपस्त**मादित्यवर्ण**मादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं **तमसः परस्ताद**ज्ञानलक्षणान्मोहान्धकारात्परं तमनुचिन्तयन्यातीति पूर्वेणैव संबन्धः ॥ ९ ॥

किंच—

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम्॥१०॥

मरणकाल में चलनवर्जित मन से भक्तियुक्त हो और योगबल से दोनों भौंहों के बीच प्राण को अच्छी प्रकार से स्थिर कर वह साधक उस परम दिव्यपुरुष को प्राप्त करता है॥१०॥

**प्रयाणकाले** मरणकाले **मनसाऽचलेन** चलनवर्जितेन **भक्त्या युक्तो** भजनं भक्तिस्तया युक्तो **योगबलेन चैव** योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितचित्त-स्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः। पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण **भ्रुवोर्मध्ये प्राणमावेश्य** स्थापयित्वा **सम्यग**प्रमत्तः सन्स एवं बुद्धिमान्योगी 'कविं पुराणम्' (गी. ८.९) इत्या-दिलक्षणं **तं परं पुरुषमुपैति** प्रतिपद्यते **दिव्यं** द्योतनात्म-कम्॥१०॥

योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्म प्राप्यत इत्येवं प्राप्त इदमुच्यते। पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान्—

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

श्रेष्ठ भाव को वहन करता है।



वेद के रहस्य जानने वाले वेदार्थवेत्ता पुरुष जिसे अविनाशी कहते हैं, वीतराग संन्यासी जिसमें प्रवेश करते हैं और जिस अक्षर को जानने की इच्छा वाले गुरुकुलवासादिपूर्वक ब्रह्मचर्यव्रत का आचरण करते हैं; उस पद को मैं तुझे संक्षेप में बतलाऊँगा॥११॥

**यदक्षरं** न क्षरतीत्यक्षरमविनाशि **वेदविदो** वेदार्थज्ञा **वदन्ति** "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" (बृ. ३.८.८) इति श्रुतेः। सर्वविशेषनिवर्तकत्वेनाभिवदन्ति 'अस्थूल-मनणु' (बृ. ३.८.८) इत्यादि। किंच **विशन्ति** प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां **यद्यतयो** यतनशीलाः संन्यासिनो **वीतरागा** विगतो रागो येभ्यस्ते वीतरागाः। **यच्चाक्षर-मिच्छन्तो** ज्ञातुमिति वाक्यशेषः। **ब्रह्मचर्यं** गुरौ **चरन्ति तत्ते पदं** तदक्षराख्यं पदं पदनीयं ते तुभ्यं **संग्रहेण** संग्रहः संक्षेपस्तेन संक्षेपेण **प्रवक्ष्ये** कथयिष्यामि॥११॥

"स यो ह वै तद्भगवन्मनुष्येषु प्राणान्तमोंकारमभिध्या-यीत कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच" (प्र. ५.१) "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" (प्र. ५.२) इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" (प्र. ५.५) इत्यादिना वचनेन "अन्यत्र धर्मादन्यत्राधर्मात्" (कठ. १.२.१४) इति चोपक्रम्य "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" (कठ. १.२.१५) इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्य-मबुद्धीनां विवक्षितस्योंकारस्योपासनं कालान्तरे मुक्तिफल-मुक्तं यत्तदेवेहापि "कविं पुराणमनुशासितारम्" (गी. ८.९) "यदक्षरं वेदविदो वदन्ति" (गी. ८.११) इति चोपन्यस्तस्य

परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं प्रसक्तानुप्रसक्तं च यत्किंचिदित्येवमर्थ उत्तरो ग्रन्थ आरभ्यते—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम्॥ १२ ॥

श्रोत्रादि सभी द्वारों को संयमितकर हृदयकमल में मन को निरुद्धकर और अपने प्राण को मूर्धा में स्थापितकर योगधारणा में स्थित हो जाय॥१२॥

**सर्वद्वाराणि** सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ तानि सर्वाणि **संयम्य** संयमनं कृत्वा **मनो हृदि** हृदयपुण्डरीके **निरुध्य** निरोधं कृत्वा निष्प्रचारमापाद्य तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारुह्य **मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितः** प्रवृत्तो **योगधारणां** धारयितुम्॥१२॥

तत्रैव च धारयन्—

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥ १३॥

('ॐ' यह एकाक्षर मन्त्र ब्रह्मस्वरूप है क्योंकि यह ब्रह्म का अभिधान है ऐसे) ब्रह्माभिधानरूप ओंकार का उच्चारण और उसके अर्थस्वरूप मुझ ईश्वर का स्मरण करता हुआ जो मरता है वह देह त्यागने वाला पुरुष सर्वोत्कृष्ट गति को प्राप्त करता है॥१३॥

**ओमित्येकाक्षरं ब्रह्म** ब्रह्मणोऽभिधानभूतमोंकारं **व्याहरन्नु**च्चारयंस्तदर्थभूतं **मामीश्वरमनुस्मरन्न**नुचिन्तयन्**यः प्रयाति** म्रियते **स** त्यजन्परित्यजन्देहं शरीरं त्यजन्देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपना-

शेनेत्यर्थः। स एवं त्यजन्याति गच्छति **परमां** प्रकृष्टां **गतिम्**॥१३॥

किंच—

**अनन्यचेताः सततं यो मां स्मरति नित्यशः।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥१४॥**

जो अनन्यचित्त निरन्तर दीर्घकाल तक मुझ परमेश्वर का स्मरण करता है, हे पृथापुत्र अंर्जुन! उस सदा समाहित योगी के लिए मैं सुलभ हूँ॥१४॥

**अनन्यचेता** नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी **सततं** सर्वदा **यो मां** परमेश्वरं **स्मरति नित्यशः**। सततमिति नैरन्तर्यमुच्यते। नित्यश इति दीर्घकालत्व-मुच्यते। न षण्मासं संवत्सरं वा, किं तर्हि? यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः। **तस्य** योगिनो**ऽहं सुलभः** सुखेन लभ्यः **पार्थ नित्ययुक्तस्य** सदा समाहितस्य **योगिनः**। यत एवमतोऽनन्यचेताः सन्मयि सदा समाहितो भवेत्॥१४॥

तव सौलभ्येन किं स्यादित्युच्यते, शृणु तन्मम सौलभ्येन यद्भवति—

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।**
**नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥१५॥**

परमसिद्धि को प्राप्त करने वाले महात्मा मुझे प्राप्तकर दुःखालय (आध्यात्मिकादि त्रिविध दुःखों का घर) एवं अशाश्वत (अनवस्थित) पुनर्जन्म को प्राप्त नहीं करते हैं॥१५॥

**मामुपेत्य** मामीश्वरमुपेत्य मद्भावमापद्य **पुनर्जन्म**

